# VĀRĀHA-ŚRAUTA-SŪTRA

BEING

## THE MAIN RITUALISTIC SŪTRA OF THE MAITRĀYANI ŚĀKHA

CRITICALLY EDITED

FOR THE FIRST TIME

BY

DR W CALAND,
Ementus Professor of
Sansknt, Utrecht



PROF RAGHU VIRA,
M A, Ph D, D Litt et Phil,
S D College, Lahore

200 COPIES

JUNE, 1933

# PREFACE

I have great satisfaction in placing before the Sanskritists the second volume of this series. It was in 1927 that I was first introduced to this work in its relation to the Gṛhya * The richness of its contents was fascinating and I immediately undertook the restoration of the text. Two years later Professor Caland joined me and long and laboriously we worked together for a year. Every page had its intricacies and problems. Whole sūtras had been distorted out of shape and single words, word-groups and phrases were often unrecognizable. Most patiently we struggled to stretch our eyes behind these corruptions to reach the true words. We succeeded in the main, though here and there we had to keep in our text doubtful or even entirely undeciphered readings. On the whole we claim no more than to present herewith a tentative text, which could certainly be improved by the discovery of fresh manuscripts.

The manuscript, upon which our edition is based, was very kindly lent to us by Dr. B Bhattacharya of the Oriental Institute, Baroda. It is designated as "press-copy" on the cover-board. It was prepared some years ago at the instance of Dr. R. Sama Sastry. It is nothing more than a mere copy of a Devanāgarī ms., with variants (many of which are derived from the Āpastamba-

* For which see the Introduction to my edition of the Vārāha Gṛhya sutra, published by the Panjab University, 1932

Srautasūtra) noted above the lines from a second ms.* Both of these mss. are deposited in the *Oriental Institute, Baroda.* We, however, could not examine them, because the authorities did not permit their removal from the Institute Library. After closing the Śrauta proper the ms. *goes on with the Pariśiṣṭas* whose names are enumerated in the beginning of the Vārāha-Gṛhyasūtra. In the near future I hope to be able to bring out the Pariśiṣṭas,† *though I shall not have the pleasure of the cooperation of the* great Dutch savant Prof. Caland.

Here I must offer a word of explanation as to why the usual introduction has been replaced by a short preface. The introduction had grown too long. Our text is new and unique, offering numerous points of interest in its details. These could not be elucidated by a miserly treatment. I might have appended here a summary of the results attained, but that would have rendered the main thesis insipid. So that now the introduction would appear as a separate volume, which would also contain an English commentary on the sūtras.

RAGHU VIRA

* In our footnotes to the text these variants are referred to as "second hand".

† A part of one of the Pariśiṣṭas "The Chandonukramaṇī of the Maitrāyaṇī Saṃhitā" was edited and annotated by me in the Journal of the Royal Asiatic Society, London, July, 1932.

# CONTENTS

ओम्

प्रयोगे पुरुषश्रुतिँ यज्ञस्य च ज्ञाने ॥ १ ॥ तँ व्याख्यास्यामः ॥ २ ॥ सर्वार्थं धर्मं प्रथमम् । उपवादाननुवदेत् ॥ ३ ॥ ब्राह्मणक्षत्रियवैश्यरथकाराणाँ यज्ञः ॥ ४ ॥ निषादस्थपतेरिष्ट्यग्न्याधेयम् ॥ ५ ॥ अध्वर्युर्यजुर्वेदेन करोत्यृग्वेदेन होता सामवेदेनोद्गाता सर्वैर्ब्रह्मा ॥ ६ ॥ उच्चैर्ऋग्वेदसामवेदाभ्यामुपाँशु यजुर्भिरुच्चैः संप्रैषैः[3] ॥ ७ ॥ सँस्थापयेत्स्वयंमिति शब्दन्यायः ॥ ८ ॥ प्राङ्मुखः कर्म कुर्याद्वा चतुर्थात्कर्मणः प्रसंपश्यन् ॥ ९ ॥ उत्तरतउपचारो विहारः ॥ १० ॥ न यज्ञाङ्गेनात्मानमभिविपरिहरेत् ॥ ११ ॥ न विहारादपपर्यावर्तेत ॥ १२ ॥ अन्तराणि यज्ञाङ्गानि बाह्याः कर्तारः ॥ १३ ॥ कर्तॄणां च प्रधानकारिणोऽभ्यन्तरा बाह्या इतरे[4] ॥ १४ ॥ यज्ञोपवीती [ दैवानि ] कर्माणि कुर्यात्प्राचीनावीती पित्र्याण्याचान्तोदकोऽहसन् ॥ १५ ॥ मन्त्रान्तेन कर्म संनिपातयेत् ॥ १६ ॥ उत्तरमन्त्रस्यादिना पूर्वस्यान्तं विद्यात् ॥ १७ ॥ पूर्वाम्नानादङ्गानामानुपूर्व्यं पूर्वप्रकरणं चोदनाव्यानियमः क्रतूनाम् ॥ १८ ॥ घृतमाज्यशब्देन प्रतीयते भार्या पत्नी जुहूः [ स्रुगग्निर् ? ] आहवनीय इति होमे ॥ १९ ॥ हिरण्यं[6] जातरूपम् ॥ २० ॥ गार्हपत्ये हविःश्रपणं प्रतितपनं च ॥ २१ ॥ दक्षिणाग्नेरेकोल्मुकाहरणम् ॥ २२ ॥ ब्राह्मणा ऋत्विज आर्षेया महान्तो युवानो यज्ञपत्याः ॥ २३ ॥ जुहोतीति हविर्होमचोदना ॥ २४ ॥ आज्यस्याधिश्रयणं गार्हपत्ये ॥ २५ ॥ पर्यग्निकरणमुत्पवनँ स्रुक्स्रुवसंमार्गः परिस्तरणं पर्युक्षणमाहवनीयस्येति ॥ २६ ॥ तूष्णींकां हविर्होमधर्मः ॥ २७ ॥ अन-

1 The original reading was probably सर .

2 Cp MS II. 2 4 18 15–16

3 The ms °प्रैषा . Cp MS IV 6, 7 115, 2

4 This sentence has no parallel in other Śrautasūtras.

5 The last two words are peculiar to our Sūtra only.

6 The ms °ण्ये.

भस्तन्त्रम् (?) ॥ २८ ॥ आसीनो जुहुयाज्जान्वक्नो[1] निगद्य स्वाहाकारान्तम्[2] ॥ २९ ॥ जमदग्नीनां पञ्चावत्तं चतुरवत्तमन्येषाम् । आमन्त्र्य जामदग्न्यमजामदग्न्यः पञ्चावत्ती स्यात् ॥ ३० ॥ माँससँहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन च पुरोडाशस्यावद्येत्स्रुवेणाज्यपयसोर्मेक्षणेन चरोः स्वधितिना पशोर्दर्व्या सोमस्य[3] ॥ ३१ ॥ यथादिष्टँ हविर्भिर्देवता यजत्याज्येनेतराः ॥ ३२ ॥ ध्रौवस्याज्यार्थान्कुर्वीत ॥ ३३ ॥ आज्यस्योपस्तीर्य हविषोऽवदानमभिघारणं च ॥ ३४ ॥ अवदायावदाय हविर्ध्रुवां प्रत्यभिघारयेदा स्विष्टकृदवदानात् ॥ ३५ ॥ आज्यस्थाल्या ध्रुवाम् ॥ ३६ ॥ अङ्गुष्ठपर्वमात्राण्यवदानानि ॥ ३७ ॥ भूयः स्विष्टकृते भूयिष्ठमिडायाः[4] ॥ ३८ ॥ मध्यादवदाय हविषः पूर्वार्धाद् द्वितीयमवद्येच्चतुरवदानस्य पश्चार्धात् तृतीयं पञ्चावदानस्य ॥ ३९ ॥ पूर्वार्धात्प्रथमं ज्येष्ठस्य ज्यैष्ठिनेयस्य गतश्रियो वा ॥ ४० ॥ अपरं कनिष्ठस्य कानिष्ठिनेयस्य बुभूषतो वा ॥ ४१ ॥ सर्वेषाँ हविषाँ स्विष्टकृते समवद्येदुत्तरार्धात्सकृत्सकृच्चतुरवदानस्य द्विर्द्विः पञ्चावदानस्य ॥ ४२ ॥ द्विरभिघारयेत् ॥ ४३ ॥ यत्र याज्यास्तत्राश्रुतप्रत्याश्रुते च चतुरवत्तपञ्चावत्ते च ॥ ४४ ॥ दक्षिणेन दक्षिणातिक्रामेत्सव्येनोदङ् ॥ ४५ ॥ अवदाय ग्रहँ वा गृहीत्वा दक्षिणातिक्रामन्संप्रेष्यति—अमुष्मा अनुब्रूहीति यथादेवतँ संप्रैषयाज्ययोश्च ॥ ४६ ॥ अनुवाच्य वाग्यतो भवत्याश्रावणात् । आश्रुते चाग्नीध्र आ प्रत्याश्रावणात् । प्रत्याश्रुते चाध्वर्युरा यज यजेति ब्रूयात् ॥ ४७ ॥ अनुवाक्यान्ते प्रणवं दधाति होता । तमध्वर्युः प्रणवेनोपसंदधाति ॥ ४८ ॥ ओ श्रावयेत्यध्वर्युरस्तु श्रौषडित्याग्नीध्रः प्रत्याश्रावयत्युत्तरतस्तिष्ठन्स्फ्यं चेध्मसंनहनानि चोद्यम्य ॥ ४९ ॥ अमुष्मै प्रेष्येति संप्रेष्यति याज्यावत्स्वाहवनीयप्रधानस्थानेषु पशुसोमयोरमुँ यजेत्यारात्[5] ॥ ५० ॥ याज्यानुवाक्यावन्ति प्रधानान्याज्यभागादीनि स्विष्टकृदन्तानि पत्नीसँयाजेषु वाजिने च ॥ ५१ ॥ दक्षिणं परिधिसंधिं प्रत्यवस्थाय वषट्कारान्ते पार्श्वेनापिदधदिवानासेकँ[6] हविषोऽप्रक्षिणन्[7]जुहोति ॥ ५२ ॥ मुखेनासेकँ[8] हविषो व्यृपन्यं[9] ह्विष्यासमाहुतिषु ह्रूयमानासु मनसा ध्यायेत् ॥ ५३ ॥ याज्यावत्स्वाहवनीयप्रधानेष्वोंकारे[10]

1 The ms जान्वग्नो Cp Ap X 9 2 जान्वक्न, ŚatBr III. 2. 1. 5 जान्वाक्न.

2 Cp VārGr I. 5.

3 For स्वधितिना...सोमस्य no parallel sūtra has been found

4 The ms स्विष्टकृते (second hand ०कृद्यो) and ०मिडायां.

5 The meaning of आरात् (which recurs many times) is not certain. Neither is the passage as a whole clear. The punctuation is tentative.

6 ! The ms इवानासेव.

7 The ms प्रदक्षिणं. Cp MS I. 4. 13 63. 7 न प्रक्षिणतेव होतव्यम्, Āp II. 19 7, Hir II. 5 195.

8 ! The ms मेखेनासेव.

9 The ms विभृपन्. Cp MS I. 4. 13 63. 8 व्यृपतेव होतव्यम्, Āp II 19. 10.

10 ! The ms ०प्यावकारे

च दक्षिणातिक्रमणम् ॥ ५४ ॥ उपभृतमधस्तादुपयम्य प्रचरति वेदमुपयाममन्यत्र दर्शात्[1] सोमे ॥ ५५ ॥ समानं दर्शपूर्णमासयोर्विधानमन्यत्र निर्देशात् ॥ ५६ ॥ उभयत्राग्नेयः पुरोडाशः । अग्नीषोमीयो द्वितीयः पौर्णमास्यामैन्द्राग्नो ऽमावास्यायामसंनयतः ॥ ५७ ॥ सांनाय्येन समानदेवतः ॥ ५८ ॥ संनयत ऐन्द्रं सांनाय्यं माहेन्द्रं वा ॥ ५९ ॥ अग्नीषोमीय उपांशुयाजः पौर्णमास्यां वैष्णवो ऽमावास्यायाम् ॥ ६० ॥ एतदिज्याप्रधानम् ॥ ६१ ॥ तदङ्गानीतराणि ॥ ६२ ॥ अर्थकारणाद्धर्मानावर्तयेद्वचनाद्वा ॥ ६३ ॥ सोमेज्याग्निष्टोमे प्रधानम् ॥ ६४ ॥ दर्शपूर्णमासिकानां प्रधानानामिष्टिपशुबन्धे चोदना ॥ ६५ ॥ सोमस्यैकाहाहीनसत्त्रेष्वङ्गानां च समन्वयः पिण्डपितृयज्ञवर्जम् ॥ ६६ ॥ प्रत्याम्नायप्रतिषेधार्थलोपैरङ्गनिवृत्तिः सामान्यादर्थात्स्वाश्रुत्यादिति[2] ॥ ६७ ॥ धर्मविनियोगे ऽनाम्नाते यथार्थं मन्त्रान्संनमयेत् ॥ ६८ ॥ द्रव्यालाभे तुल्यार्थानां यथासदृशं प्रतिनिदध्याद्यथार्थमतुल्यार्थे ॥ ६९ ॥ प्रधानानां धर्मविप्रतिषेधे भूयस्त्वेन धर्मान्विनियच्छेत्तुल्यां पूर्वचोदनया ॥ ७० ॥ कर्मणां गणादेशे प्रत्यृचं करोति प्रतिपर्यायं च ॥ ७१ ॥ अमुष्मै प्रणीयमानायानुब्रूहीत्युक्ते त्रिरुक्तां करोति ॥ ७२ ॥ सोमे क्रीते हविर्धानप्रवर्तने च ॥ ७३ ॥ दर्भाः परिस्तरणे ॥ ७४ ॥ स्वाहाकारान्ताः समिधः ॥ ७५ ॥ अग्निं सादयिष्यन्नुद्धृत्य लक्षणमद्भिरवोक्ष्य सादयति ॥ ७६ ॥ संत[त]कर्मसु पुरस्तादारम्भं प्रदक्षिणं प्रागपवर्गाण्युदग्वा[3] करोति ॥ ७७ ॥ प्रसव्यं पित्र्याणि ॥ ७८ ॥ मङ्गलानि लोकतः ॥ ७९ ॥ कर्माण्यावृची कृतसंख्येषु मन्त्रानावर्तयेत् ॥ ८० ॥ संप्रैषानुवचनेष्वाश्रुतप्रत्याश्रुतेषु च मन्द्रस्वारः[4] ॥ ८१ ॥ सामिधेनीप्रभृत्याज्यभागान्तेपूर्ध्वमाज्यभागाभ्यामानुयाजेभ्यो मध्यमाः ॥ ८२ ॥ अनुयाजप्रभृत्युच्चैस्तरां शंय्वन्तात् ॥ ८३ ॥ त्रिंशद्वर्षाणि दर्शपूर्णमासाभ्यां यजेत यावज्जीवं वा ॥ ८४ ॥ पञ्चदश दाक्षायणयज्ञेन दर्शपूर्णमासयोः स्थाने ॥ ८५ ॥ यावज्जीवमग्निहोत्रम् ॥ ८६ ॥ अनियमो ऽन्यत्र ॥ ८७ ॥

इतीष्टिसूत्रे प्रथमं खण्डम् ॥

चन्द्रादर्शनेनामावास्यामुपवसेत्संपूर्णेन पौर्णमासीं पूर्वे वा ॥ १ ॥ केशश्मश्रु वापयित्वा मांसमाषलवणवर्जमश्नीतो यजमानः पत्नी चासुहितौ[5] ॥ २ ॥

अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति स्वर्विदेति ।

आदित्यं तेजसां तेज उत्तमं श्रेयसाय यमतां देवताभ्य. ॥

1 Refers probably to दशापवित्रम्.

2 Prof Caland suggests "because it has a śruti, i. e., a brāhmaṇa of its own."

3 उदग् stands for उदगपवर्गाणि.

4 The ms मंत्रपाणा स्व°.

5 The ms वासहितौ.

इमामूर्जं पञ्चदशीं[1] याः प्रविष्टास्ता देवताः परिगृह्णामि सर्वाः ।
पौर्णमासं हविरिदं जुषन्तामामावास्यं हविरिदं जुषन्ताम् ॥

इति यथारूपं गार्हपत्यादाहवनीयं ज्वलन्तं प्रणीय ममाग्ने वर्चो विहवेष्वि-त्यन्वादधाति ॥ ३ ॥ उत्तराभ्यां वैहवीभ्यामपरयोरन्ववधाय व्रतमुपैति ॥ ४ ॥

पयस्वतीरोषधयः पयस्वद्वीरुधां पयः ।
अपां पयसो यत्पयस्तेन मामिन्द्र सँसृज ॥

इति पाणी प्रक्षाल्याग्ने व्रतपते इत्याहवनीयँ यजमान उपतिष्ठते[2] ॥ ५ ॥ सम्राडसि व्रतपा असि व्रतपतिरसि व्रतं चरिष्यामि तत्ते ब्रवीमि तन्मे गोपाय तच्छकेयं तेन शकेयं तेन राध्यासमित्यादित्यम् । यद्यस्तमितः स्यादाहवनीयम् ॥ ६ ॥ पुरस्ता-द्बर्हिराहरणस्य पौर्णमास्यां व्रतमुपेयाद्वत्सापाकरणस्यामावास्यायाम् ॥ ७ ॥ उभयोः पूर्वेद्युः समन्वाधानम् ॥ ८ ॥ नानृतं वदेन्न मांसं प्राश्नीयान्न स्त्रियमुपे-यात् । माषवर्जं[3] सायमारण्यमश्नीयात् ॥ ९ ॥ आरण्यहविश्चेत्स्यादुदकम् ॥ १० ॥ आहवनीयागारे यजमानो विहरति गार्हपत्यागारे पत्नी तयोर्दक्षिणौ[3] ॥ ११ ॥ प्रत्यगाशिषोऽकर्मयुक्ता मन्त्रा याजमानम्[4] ॥ १२ ॥ दक्षिणत उपचारो यजमा-नस्यापर[त]ः पत्न्याः ॥ १३ ॥ आमन्त्रिते प्रणवमुक्त्वा यथार्थमनुष्ठानम् ॥ १४ ॥ यथादेवतमाहुतिमनुमन्त्रयते यथाकर्मसँयोगमारात्[5] ॥ १५ ॥ को वः प्रणयतीति प्रणीयमाना भूर्थ कश्च वाक् च [ ऋक्च ] गौश्च वट् च खं च [ धूश्च ] नीर्थं पृथेकाक्षराः पूर्वरामा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा सँविदानाः स्वस्ति यज्ञं नयत प्रजानती[रिति] ॥ १६ ॥ ब्रह्मपूताः स्थेति सादने च[8] ॥ १७ ॥ अग्निं[9] होतारमिति दर्विर्निर्वपणमभिमृशेन्निरुप्यमाणे वा जपेत्[10] ॥ १८ ॥ पुरस्तात्स्तम्बयजुषो ऽन्तर्वेद्युपविश्य

अयं वेदः पृथिवीमन्वविन्दद् गुहाहितां निहितां गह्वरेषु ।
स मह्यं लोके यजमानाय विन्दत्वच्छिद्रं यज्ञं भूरिरेताः कृणोतु ॥
इति वेदमादत्ते[11] ॥ १९ ॥
वेदेन वेदिं[1] विविदुः पृथिव्याः सा पप्रथे पृथिवी पार्थिवानि ।

1 MS I. 4. 1.
2 Cp MS I. 4. 5 52. 14-15.
3 I. e. to the south of these two fires. This injunction is not found in any other Sûtra.
4 The ms मंत्रातियजमानं. Cp Âp IV. 1. 3
5 The meaning of आरात् is not certain.
6 The ms भूयश्च.
7 Âp IV. 4. 4, Hir VI. 1 500 नूथ.
8 The ms सदनेन च.
9 MS I. 4. 1: 47. 4
10 Cp MS I. 4. 5: 52. 17.
11 The ms वेदेन वेदिमादत्ते. Cp Mân I. 2. 4 4.

गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञस्तायते विश्वदानीम् ॥

**इति त्रिर्वेदेन वेदिमभिमार्ष्टि**[1] ॥ २० ॥ **उभयत्राज्यावेक्षणम्**[2] ॥ २१ ॥ पन्नाना त्वा वातानामित्यान्तादनुवाकस्याज्यग्रहान्[3] ॥ २२ ॥ युनज्मि त्वेति[4] च **परिधिषु परिधीयमानेष्वाहवनीयम्**[5] ॥ २३ ॥ **भ्रुवाकरणमुभयत्र** ॥ २४ ॥ ममाग्ने वर्चे[6] **इत्यष्टाभिर्वैहवीभिर्हवींष्यासन्नान्यभिमृशेत्** ॥ २५ ॥ **चतुर्होत्रा च पौर्णमास्यां**[6] **प्रजाकामः पञ्चहोत्रा चामावास्यायाँ स्वर्गकामः** ॥ २६ ॥ चित्ति स्रुगिति **दशहोतारं पुरस्तात्सामिधेनीनाम्** ॥ २७ ॥

अङ्गिरसो मास्यै यज्ञस्य प्रातरनुवाकैरवन्तु ।

समिद्धो अग्निराहुत स्वाहाकृत पिपर्तु न ॥

**इति समिद्धम्** ॥ २८ ॥ मनो ऽसि प्राजापत्य मनसा [मा] भूतेनाविशेति **स्रुवाघारम्** ॥ २९ ॥ वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेति **स्रौचम्** ॥ ३० ॥ देवा पितर इति **प्रवरे प्रवर्यमाणे**[10] ॥ ३१ ॥ पृथिवी होतेति[11] **चतुर्होतारं पुरस्तात्प्रयाजानाम्** ॥ ३२ ॥

इतीष्टिसूत्रे द्वितीय खण्डम् ॥

वसन्तमृतूना प्रीणामि स मा प्रीत प्रीणातु ।
वसन्तस्याह देवयज्यया तेजस्वान्पयस्वान्भूयासम् ॥
ग्रीष्ममृतूना प्रीणामि स मा प्रीत प्रीणातु ।
ग्रीष्मस्याह देवयज्ययेन्द्रियवान्वीर्यवान्भूयासम् ॥
वर्षा ऋतूना प्रीणामि ता मा प्रीता प्रीणन्तु ।
वर्षाणामह देवयज्यया पुष्टिमान्पशुमान्भूयासम् ॥
शरदृतूना प्रीणामि सा मा प्रीता प्रीणातु ।
शरदो ऽह देवयज्ययान्नवान्वर्चस्वान्भूयासम् ॥
हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीताम् ।
हेमन्तशिशिरयोरह देवयज्यया सहस्वाँस्तपस्वान्भूयासम् ॥

**इति प्रयाजान्** ॥ १ ॥

1 The ms वेदिमभाष्टि

2 उभयत्र can be interpreted as आघ्रेये च याजमाने च Cp sūtra 24

3 MS I 4 4 51 16

4 MS I 4 1

5 *Cp MS I 4 5 52 18, Āp IV 6 4 beg*

6 The ms पौर्णमास.

7 MS I 9 1 131 1

8 The ms मे अस्य

9 Āp IV 9 2 adds इति सामिधेनीना प्रतिपदि जपति

10 Cp MS I 4 11 60 6

11 MS I 9 1 131 3

अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासम् ॥
सोमेन यज्ञश्चक्षुष्मान्सोमस्याहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासम् ॥

**इत्याज्यभागौ ॥ २ ॥ अग्निर्होतेति पञ्चहोतारं पुरस्ताद्धविषाम् ॥ ३ ॥**

अग्निरन्नादो ऽग्नेरहं देवयज्ययान्नादो भूयासम् ॥
दब्धिर्नामास्यदब्धो ऽहं भ्रातृव्यं दभेयम् ॥

**इत्युपाँशुयाजौ ॥ ४ ॥**

अग्नीषोमौ वृत्रहणा अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् ॥
इन्द्राग्न्योरहं देवयज्ययेन्द्रियवानन्नादो भूयासम् ॥
इन्द्रस्याहं देवयज्ययेन्द्रियवान्भूयासम् ॥
महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम् ॥

**इत्यौत्तरतनिकानप्यनुमन्त्रानधीयेत ॥ ५ ॥**

इन्द्रस्य वैमृधस्याहं देवयज्ययाऽसपत्नो भूयासम् ॥
इन्द्रस्य त्रातुरहं देवयज्यया त्राता भूयासम् ॥
पूष्णो ऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासम् ॥
सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं गमेयम् ॥
अदितेरहं देवयज्यया प्र प्रजया पशुभिर्जनिषीय ॥
विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयम् ॥
द्यावापृथिव्योरहं देवयज्यया प्रजनिषीय प्रजया पशुभिः ॥

अमुष्याहं देवयज्ययेत्यनाम्नाते **ऽभ्यूहेत्** ॥ ६ ॥ अग्निः स्विष्टकृद्यज्ञस्य प्रति
तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्यग्निं **स्विष्टकृतम्** ॥ ७ ॥ अग्निर्मा दुरिष्टात्
सवितापशँसाद्यो नो अन्ति शपति तमेतेन जेषमिति **प्राशित्रमवदीयमानम्** ॥ ८
**इडायास्तूष्णीम्** ॥ ९ ॥ उपहवे यसीयस्येहीति । विदसीत्युच्चैः[2] । घृतेन मा समुक्
त्यन्तम् । अस्मास्विन्द्र इति धे ॥ १० ॥ [आ]माशिषे इति **नाममाहे** ॥ ११ ॥

इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना ।
सा नो अन्नेन हविषोत गोभिरिडा पिन्वतां पयसाभ्यस्मान् ॥

**इतीडामार्जने** ॥ १२ ॥ मम पाहीति बर्हिषि हवीँष्यासन्नान्यभिमृश्येद् ॥ १३
आग्नेयं[4] चतुर्धा व्युद्दिशेत्—इदमग्नीध इदं ब्रह्मण इदँ होतुरिदमध्वर्यो[र्] [इति] । इदँ यजमा
स्येति यजमानभागम् ॥ १४ ॥ दिशां क्लृप्तिरसि दिशः प्रीणामि दिशो मा प्रीता अवन्त्वि

1 The ms •मंत्रपान• first hand, मंत्रा-पान• second hand.

2 The ms adds उपहवे.

3 Cp MS I. 4. 5 53. 2.

4 MS I. 4. 1: 47. 10, See also its brāhmaṇa I. 4. 5: 53. 4.

5 Cp MS I. 4. 12: 62. 4, Āp IV. 10, Mān I. 4. 2. 11.

6 The ms adds च.

व्युद्दिष्टे दक्षिणां ददाति ॥ १५ ॥ दक्षिणाग्नौ यजमानो मन्त्रान्तमोदनं पक्त्वा दक्षिणस्याँ वेदिश्रोण्यामासाद्याभिमृशेत्—

इयँ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः ।

अनेनौदनेनाति मृत्युं तराम्यहम् ॥

प्रजापतेर्भागो ऽस्यूर्जस्वान्पयस्वान् । अक्षितो ऽस्यक्षित्यै त्वा । अक्षितो नामासि[1] मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके[2] ॥ प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाहि चक्षुःश्रोत्रे मे पाहि ॥ ऊर्गस्यूर्जं मयि धेहि ॥ प्रजापतिरहं त्वया साक्षादृध्यासमिति ॥ १६ ॥ अग्रेणोत्तरमुदक्षमुद्वास्य दक्षिणतःसन्नद्ध ऋत्विग्भ्यः परिहृत्यादध्यात्[4] ॥ १७ ॥ सं मे संनतयः संनमन्तामिध्मसंनहने हुत इति संमार्गानाहितान् ॥ १८ ॥ महाहविर्होतेति[5] सप्तहोतारं पुरस्तादनुयाजानाम् ॥ १९ ॥

इतीष्टिसूत्रे तृतीयं खण्डम् ॥

बर्हिषो ऽहं देवयज्यया प्रजावान्भूयासम् ॥

नराशँसस्याहं देवयज्यया वीर्यवान्भूयासम् ॥

अग्निः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् ॥

इत्यनुयाजान् ॥ १ ॥ वाजवत्या उभयत्र ॥ २ ॥ सा मे सत्याशीरिति प्रस्तरे प्रह्रियमाणे[6] ॥ ३ ॥ वसिष्ठागच्छतेति[7] वरँ वृणीते ॥ ४ ॥ वि ते मुञ्चामीति परिधिषु प्रह्रियमाणेष्वाहवनीयम्[8] ॥ ५ ॥ इष्टो यज्ञो भृगुभिरिति सँस्रावभागान्[9] ॥ ६ ॥ अदो मागच्छतेति[10] द्वितीयँ वरमदो मागम्यादिति तृतीयम् ॥ ७ ॥ स्रुचोर्विमोचनमुभयत्र ॥ ८ ॥ पत्नी च पत्नीसँयाजाननुमन्त्रयते—

सोमस्याहं देवयज्यया सुरेता रेतो धेषीय ॥

त्वष्टुरहं देवयज्यया सर्वाणि रूपाणि पशूनां पुषेयम् ॥

देवानां पत्नीनामहं देवयज्यया पत्नीर्यज्ञस्य मिथुनं तासामहं देवयज्यया मिथुनेन प्रभूयासम्[11] ॥

1 The ms अप्ने॰.

2 The ms adds स. Cp KS V. 5: 47. 13.

3 The ms गम्यात्. Cp KS ib.

4 Perhaps to be emended to परिहृत्य दद्यात्.
Cp MS I. 4. 6: 54 7-8.

5 MS I. 9. 1: 131. 10.

6 Cp MS I. 4, 1: 47. 12 and the brāhmaṇa I. 4, 5: 53. 7-8.

7 MS I. 4. 1: 48. 7.

8 Cp MS I. 4. 1: 48. 2 and the brāhmaṇa I. 4, 5: 53. 11-12.

9 Cp MS ib 48. 4, 53. 12.

10 MS I. 4. 1: 48. 7-8.

11 The mantra is not clear. Cp TS I. 6. 4. 4 देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनम् । तयोरहं देवयज्यया मिथुनेन प्रभूयासम्.

राकाया अहं देवयज्यया वीरान्विदेयम् ॥

सिनीवाल्या अहं देवयज्यया पशून्विदेयम् ॥

कुह्वा अहं देवयज्यया प्रतिष्ठां गमेयम्[1] ॥

अग्निर्गृहपतिर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन गृहैः प्रतिष्ठां गमेयम् ॥

**इत्यग्निं गृहपतिम्** ॥ ९ ॥

इडास्मं अनुवस्ता घृतेन यस्याः पदे पुनते देवयन्त ।

वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवी ॥

**इतीडाम्** ॥ १० ॥ **दक्षिणाग्निका होमा उभयत्र** ॥ ११ ॥ या सरस्वती वेशभगीनेति[2] **मुखं विमृष्टे** ॥ १२ ॥ **प्रायश्चित्ताहुतयः समिष्टयजुः कपालानां विमोचनं प्रणीतानां विमोचनमुभयत्र** ॥ १३ ॥ सं यज्ञपतिराशिषेति **यजमानो यजमानभागं प्राश्नाति**[3] ॥ १४ ॥ **यदि प्रवसेत्समिष्टयजुषा सह जुहुयात्**—प्रजापतेर्विभान्नाम लोकस्तस्मै त्वा दधानि सह यजमानेनेति ॥ १५ ॥ **सांनाय्यस्य प्राश्नीयान्नाब्राह्मणः** ॥ १६ ॥ इदं हविरिति[4] **शृतस्य** ॥ १७ ॥ दधिक्राव्णो अकारिषमिति **दध्नः** ॥ १८ ॥ **अन्तर्वेदि प्रणीतास्ववमृश्य मार्जयन्त ऋत्विजो यजमानश्च** ॥ १९ ॥ **आसिच्यमान उदके ऽविच्छिन्ने** सदसीत्यभिमन्त्र्य **दिङ्मन्त्रैः प्रतिदिशं व्युत्सिच्य**

यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु ।

तेन मे वाजिनीवति मुखमङ्धि सरस्वति वर्चसा ॥

**इति मुखानि विमृजते** ॥ २० ॥

समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ।

अरिष्टा अस्माकं वीरा मा परासेचि मत्पयो मा मा हिंसीत्त्वं धनम् ॥

**इति प्रणीताशेषं निनीय**

नम कृताय कर्मणे अकृताय कर्मणे नम ॥

अयाड् यज्ञं जातवेदा अन्तर पूर्वो ऽस्मिन्निषद्य ।

स त्वं सनि[7] सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेद ॥

**इति** ॥ २१ ॥ **दक्षिणत आहवनीयमुपस्थाय** विष्णु पृथिव्यां व्यक्रंस्तेति[8] **पर्यायैर्यजमानस्त्रीन्क्रामति**। विष्णुर्दिक्षु व्यक्रंस्तानुष्टुभेन छन्दसेति **चतुर्थम्**[9] ॥ २२ ॥ स्वयं

1 Instead of the mantra कुह्वा अहं॰ (substituted on the authority of Mān I, 4 3 1) the ms has सपत्नी पत्नी सं म समायुपा सं प्रजया राममेवर्चसा पुन॰ सं पत्नी पत्नाद गच्छे समात्मा तन्वा ममेति (cp Mān I 3, 5, 18)

2 MS I, 4 3 51, 8.

3 Identical with MS I, 4, 6 53 16

4 The ms प्रजापविभागाम्नाम

5 MS III, 11, 10 156 16

6 MS I, 5, 1 66 6

7 MS I, 4 2 48 9

8 MS I, 4 2 48 14.

9 MS I, 4 2 prescribes only three steps For the fourth see KS V 5 47 21, Cp Mān I 4 3 11.

भूरसीत्यादित्यमुपस्थाय प्रत्यपक्रामति—

इदमहमाभ्यो दिग्भ्यो ऽस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥
[ इदमहमस्या दिवो ऽस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥[1] ]
इदमहमस्मादन्तरिक्षादस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥
इदमहमस्याः पृथिव्या अस्मादन्नाद्याद् भ्रातृव्यं निर्भजामि निर्भक्तो यं द्विष्मः ॥

इति ॥ २३ ॥ अगन्म स्वः सं ज्योतिषाभूमेत्याहवनीयमुपस्थायेदमहममुष्य प्राणं निवेष्टयामीति पार्ष्ण्याभिदक्षिणं निवेष्टयति ॥ २४ ॥ यो अस्मान्द्वेष्टि यं च वयं द्विष्म इत्यभिचरन् ॥ २५ ॥ तेजो ऽसी[2]त्याहवनीयम् ॥ २६ ॥ अग्ना आयूँषि पवस इति तिसृभिर्गार्हपत्यम् । अग्ने गृहपत इति च ॥ २७ ॥ असा अनु मा तन्विति नामग्राहं पुत्रानन्वातयते (?) ॥ २८ ॥ ज्योतिषे तन्तवे त्वेत्यै[3]न्तर्वेद्युपविश्य ये देवा यज्ञहन इति यजमानस्त्रीनतिमोक्षान्जपति ॥ २९ ॥ वेदो ऽसीति[4] वेदमादत्ते ॥ ३० ॥ घृतवन्तं कुलायिनमिति स्तृणाति संततं गार्हपत्यादध्याहवनीयात्[5] ॥ ३१ ॥ गोर्मे अग्ने इति प्राङ् प्रक्रम्य जपति ॥ ३२ ॥ अग्ने व्रतपते व्रतमचारिषं तं ते प्रावोचं तदशकं तेनाशकं तेनारात्समित्याहवनीयम् ॥ ३३ ॥ सम्राडसि व्रतपा असि व्रतपतिरसि व्रतमचारिषं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्समित्यादित्यम् ॥ ३४ ॥

यज्ञो बभूव स उ वावभूव स प्रजज्ञे स उ वावृधे पुनः ।
स प्रजानामधिपतिर्बभूव सो अस्मासु द्रविणमादधातु वयँ स्याम पतयो रयीणाम् ॥

इति जपित्वा सर्वेषु समिध आधाय तेन घर्मेण पर्युक्षति ॥ ३५ ॥

इतीष्टिसूत्रे चतुर्थं खण्डम् ॥

तन्त्रादिषु ब्रह्मिष्ठं ब्रह्माणं वृणीते—भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृण इति ॥ १ ॥ वृतो जपति—देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे[7] प्रब्रवीमि मनो वाचे वाग्गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभे ऽनुष्टुप् पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो [ विश्वे देवा बृहस्पतये ] ॥ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायाहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिः ॥ महो मे ऽवोचो यशो मे ऽवोचो भर्गो मे ऽवोचः स्तोमं मे ऽवोचो ऽन्नाद्यं मे ऽवोचः प्रजां मे ऽवोचः प्रतिष्ठां मे ऽवोच इति ॥ २ ॥ दक्षिणतः कर्माण्यनुतिष्ठेत् ॥ ३ ॥ ब्राह्मौदनस्य

1 Cp TS I. 6. 6. 1.
2 The ms ३स्वः, thus retaining the Saṃhitā accent.
3 MS I. 4. 2.
4 MS I. 5. 1: 66. 8.
5 MS I. 4. 3.
6 Cp MS I. 4. 8: 56. 7. In Mān I. 3. 5. 19, Āp III. 10. 5 and other Sūtras it is the Hotṛ who performs this act.
7 The ms मनसा.

प्राशिष्यन्नोदनस्यादायौदनेन जुहोति—ओदनौदनस्यै त्वा संजुहोमि स्वाहेति ॥ ४ ॥ अग्ने ऽङ्गिरो ऽहुताद्यान्मा पाहि सुत्रामणिस्त्वादधानीति प्राश्नाति ॥ ५ ॥ दर्शपूर्णमासयोः परिस्तीर्णे विहारे तीर्थेन प्रपद्य दक्षिणत आहवनीयस्य सँस्तीर्णमभिमन्त्रयते —अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद यो ऽस्मत्पाकतर इति ॥ ६ ॥ सव्येन तृणं प्रच्छिद्य प्रत्यग्दक्षिणा निरस्यति—निरस्तः परावसुः [ सह ] पाप्मनेति ॥ ७ ॥ इदमहमर्वाग्वसोः सदने सीदामि देवेन सवित्रा प्रसूत इत्यपः स्पृष्ट्वोपविशति ॥ ८ ॥ अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिः ॥ तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय ॥ सूर्यो दिवो यज्ञं पातु वायुरन्तरिक्षाद्यज्ञपतिं पात्वग्निर्मा पातु मानुषमिति जपति ॥ ९ ॥ आमन्त्रितो ऽपः प्रणेष्यन्तमनुजानाति—भूर्भुवः स्वः प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे स्वर्गे लोके यजमानो ऽस्तु ॥ सप्तऋषीणाँ सुकृताँ यत्र लोकस्तत्रेमँ यज्ञँ यजमानायँ धेहि ॥ देवस्य सवितुः प्रसवे बृहस्पतिप्रसूतः[3] ॥ ओं प्रणयेति ॥ १० ॥ अनामन्त्रितो हविः प्रोक्षिष्यन्तमनुजानात्यामन्त्रित उत्तरान्परिग्राहानिध्माबर्हिश्चानामन्त्रितः सामिधेनीप्रवरौ चामन्त्रित आश्रावणाय समिधे च—प्रोक्ष यज्ञं बृहस्पते परिगृहाण वेदिं प्रोक्ष यज्ञं प्रजापते ऽनुब्रूहि यज्ञं प्रवृणीष्व यज्ञँ वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेभ्यः प्रजापते प्रतिष्ठ यज्ञमिति यथारूपम् ॥ ११ ॥ देवता वर्धय त्वमित्यनुपजेत् ॥ १२ ॥ व्याहृतीः[4] पुरस्तात्प्रणवं चोपरिष्टात् ॥ १३ ॥ अनूच्यमानासु सामिधेनीषु वाचँ यच्छेत्प्रयाजानुयाजेष्विज्यमानेषु प्रधानेषु च परिहृते प्राशित्र आ प्रस्थानात् ॥ १४ ॥ यदि वाचँ विसृजेत्—इदं विष्णुः ॥ अग्नाविष्णू ॥ पावका नः सरस्वती[7] ॥ बृहस्पति[8] हवामहे इति निगद्य वाचँ यच्छति ॥ १५ ॥ मार्जिते ऽग्रेणाहवनीयं प्राशित्रमाह्रियमाणं प्रतीक्षते—मित्रस्य त्वा चक्षुषा प्रतीक्ष इति ॥ १६ ॥ प्रतीक्ष्य सावित्रेण प्रतिगृह्यादित्यास्त्वा पृष्ठे सादयामीति[9] भूमौ प्रतिष्ठाप्य सुपर्णस्य त्वा गरुत्मतश्चक्षुषावेक्ष इत्यवेक्ष्याङ्गुष्ठेनोपमध्यमया च प्राश्नात्यनुपस्पृशन्दन्तान्—अग्नेष्ट्वास्येन प्राश्नामीति । ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेति ॥ १७ ॥ प्राचीरप उत्सिच्याचामति—सत्येन त्वाभिजिघर्मीति हृदयदेशमभिमृशति । इन्द्रस्य त्वा जठरे दधामीति नाभिदेशम् ॥ १८ ॥ वाङ् म आसन् नसोः प्राणो ऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजो ऽरिष्टा विश्वाङ्गानि तनूर्मे तन्वा सहेति सर्वाणि गात्राणि ॥ १९ ॥ आहितामनुयाजसमिधमनुमन्त्र-

1 The ms ॰दन औदनस्य.

2 The other texts ॰मानं च.

3 For देवस्य॰ cp MS IV. 9 2 123. 5 ॰बृहस्पतिप्रसूता (var lect बृहस्पतिः प्रसूता). Āśv I. 12. 12 reads with the Var बृहस्पतिप्रसूतः.

4 The ms व्याहृतिभिः.

5 MS I. 2. 9 18. 17.

6 MS IV. 10. 1: 142. 3, 5.

7 MS ib 7.

8 MS IV. 12. 1: 178 3.

9 The ms adds बृहस्पतिमुखस्य after सादयामि.

10 The ms प्राणोपषो॰.

यते—एषा ते अग्ने समित्तया त्वँ वर्धस्व चाप्यायस्व वर्धिषीमहि च वयमा च प्यायिषीमहि च स्वाहेति ॥ २० ॥

इतीष्टिसूत्रे पञ्चमं खण्डम् ॥

वासिष्ठः सोमे ब्रह्मा ॥ १ ॥ आसन्नेष्वग्नीषोमीय आज्येषु दक्षिणत आहवनीयस्यान्तर्वेदि मन्त्रोपवेशनं प्रातरनुवाककाले च ॥ २ ॥ न धिष्ण्यान्व्यवेयात् ॥ ३ ॥ तीर्थेन प्रपद्य प्रायश्चित्ताहुतयः पवमानान्वारम्भणं धिष्ण्योपस्थानमिति क्रियेत ॥ ४ ॥ आमन्त्रिते स्तोत्रानुज्ञानम्[1]—भूर्भुवः स्वर्देवस्य सवितुः प्रसवे बृहस्पते स्तुत रश्मिना क्षयाय क्षयं जिन्वेत्युत्तर उत्तरश्च स्तोमभागैः[2] ॥ ५ ॥ स्तुते[3] प्रहोपस्थानकलशोपस्थानान्तं कृत्वा सदः प्रविशत्यपरेण द्वारेण पश्चार्धेन विहारस्य द्वार्ये संमृश्य यथापूर्वे

उरुं नो लोकमनुनेषि विद्वांस्स्वर्विज्ज्योतिरभयँ स्वस्ति ।

ऋष्वा त इन्द्र स्थविरस्य बाहू उपस्थेयाम शरणा बृहन्ता ॥

इति प्रपद्य दक्षिणतो मैत्रावरुणधिष्ण्यस्य मन्त्रोपवेशनम् ॥ ६ ॥ पूर्वेण द्वारेण दक्षिणा यथेतं[4] निष्क्रमणम् ॥ ७ ॥ विसमाप्ते सवने ऽपरेण ॥ ८ ॥ सवनसँस्थासु यथाप्रसृतम्[5] ॥ ९ ॥ स्तुतशस्त्रेष्वा वषट्काराद्वाचँ यच्छेदुपाकृते प्रातरनुवाक[6] उँपाँश्वन्तर्यामयोर्होमाद्धोमात्[7] ॥ १० ॥

इतीष्टिसूत्रे षष्ठं खण्डम् ॥

इति प्रथमो ऽध्यायः ॥

---

1 Cp MS IV. 9. 10. 131. 8-9.

2 The ms ॰ज्ञातम्.

3 The ms ॰भार्गा.

4 The ms स्तुतेति (for स्तुतेति ?).

5 The ms यथार्थ.

6 The ms प्रसृ॰.

7 Probably to be emended to ओ॰ (=आ उ॰).

सर्वकामस्य दर्शपूर्णमासौ ॥ १ ॥ व्रतोपेते यजमाने

देवा गातुविदो गातुँ यज्ञाय विन्दत[1] ।

मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम् ॥

इति जपित्वा शाखामाहरति । शमीशाखां पलाशशाखाँ वा बहुपलाशामप्रतिशुष्काग्रां प्राचीमुदीचीँ[2] वाहानाम् ॥ २ ॥ इषे त्वेति[3] छित्त्वा सुभूतायेति[3] संनमति ॥ ३ ॥ इमां प्राचीमुदीचीमिषमूर्जमभि सँस्कृता[4] बहुपर्णामशुष्काग्राँ हरामि पशुपामहमित्याहरति[5] ॥ ४ ॥ तया सदर्भपिञ्जूलया षड् वत्सानपाकरोति—वायवः स्थेति[3] ॥ ५ ॥ देवो वै इत्येकैकाँ सँस्पर्शयन्गाः प्रकालयति ॥ ६ ॥ आप्यायध्वमघ्न्या देवेभ्या इन्द्राय भागमित्याप्याययति । महेन्द्रायेति महेन्द्रयाजिनः ॥ ७ ॥

शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहाना[6] ।

रुद्रस्य हेतिः परि वो वृणक्तु ॥[7]

इति व्रजन्तीरनुमन्त्रयते ॥ ८ ॥ पूषा व. परस्पा अदिति. प्रेत्वरीर्पा इन्द्रो घो

1 In Mān I. 1. 1. 12 the line is to be corrected after Vār.

2 The ms वाहानम्, the Mān mss वाहनां, Hir I. 4 76 वाहीना. वाहाना (=वा आहाना) may be right. वाहानं (adj. to वृत्तं) recurs in I. 6. 1, where it is corrected by the second hand into वाहीनं. Mān I. 8. 1. 5 has instead प्रहाणं "bent". Thus आहानां may equally well mean प्रहाणां or आनतां.

3 MS I. 1. 1.

4 The ms first hand संभृतां.

5 Note that आहरति has already been read in sūtra 2.

6 The ms second hand पुजी॰, which is after Āp I. 2 3, 5.

7 The mantra is partly taken over from MS IV. 1. 1.

8. The mantra is taken from MS IV. 1. 1: 2 6, which reads प्रेत्वरीया. Perhaps the Vār is correct—प्रेत्वरी + पा . For प्रेत्वरी see Acta Orientalis V. 252. If प्रेत्वरीया be the right form we should expect प्रेत्वरीयेन्द्रो प्रेत्वरीपा· may mean "she who protects the cows when they start for the meadows". प्रेन्वनीया of Pāṇini

ऽघ्न्यो ऽनष्टाः पुनरेतेति च ॥ ९ ॥ ध्रुवा अस्मिन्निति यजमानं प्रेक्षते गृहान्वाभिपर्यावर्तते ॥ १० ॥ यजमानस्य पशून्पाहीत्यग्निष्ठे ऽनस्यग्न्यगारे वा पुरस्तात्प्रतीचीं शाखामुपकर्षति ॥ ११ ॥ असिदं दात्रं पश्चाद् गार्हपत्यस्य सावित्रेणादत्ते ऽश्वपर्शुं[2] वा—देवस्य त्वेति प्रभृतिनाददे इत्यन्तेन ॥ १२ ॥ गोपदेसीति गार्हपत्यं प्रेक्षते ॥ १३ ॥ प्रत्युष्टं रक्ष इत्याहवनीये प्रतितप्योर्वन्तरिक्षं वीहि ॥ प्रेयमगादिति प्राग्वोदग्वाभिप्रव्रज्य यतः कुतश्चिद्दर्भान्बर्हिराहरति ॥ १४ ॥ देवाना परिपूतमसीति परिपूय विष्णो स्तूपं इति स्तम्बं गृहीत्वातिसृष्टो गवा भाग इत्येकां शुष्टिं द्वे वा विसृजति ॥ १५ ॥ देवेभ्यस्त्वोर्ध्वबर्हिर्भ्य इत्यूर्ध्वमुन्मृज्य माधो मोपरि परुस्त ऋध्यासमिति दात्रमुपहृत्य विशाखानि प्रति लुनाति सावित्रेण दामीत्यन्तेन ॥ १६ ॥ प्रथमलूनं संनह्य प्रस्तरं कृत्वा पृथिव्या सपृच पाहीति तृणमन्तर्धाय सादयति ॥ १७ ॥ आच्छेत्ता ते मा रिषमिति प्रभूतं लूत्वा जपति ॥ १८ ॥ अतस्त्वं बर्हिरित्यालवानभिमृशति ॥ १९ ॥ सहस्रवल्शा इत्यात्मानं प्रत्यभिमृशति ॥ २० ॥ अपः स्पृष्ट्वा- ऽदुपिता योनिरिति शुल्वं प्रतिधायादित्यै रास्नासीत्यावेष्टयति त्रिधातु पञ्चधातु सप्तधातु वा ॥ २१ ॥ एवं धातुसंभरणास्तरणयोः ॥ २२ ॥ सुसंभृता त्वा संभरामीति शुल्वे बर्हिः संभरति ॥ २३ ॥ अलुभिता योनिरिति प्रस्तरमाधायेन्द्राण्या संनहनमित्यन्तावभिसमायच्छति ॥ २४ ॥ पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति ॥ २५ ॥ स ते मा स्थादिति पश्चात्प्राञ्चमुपकर्षति ॥ २६ ॥

आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः ।
बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे[12] ॥

इत्यारभ्येन्द्रस्य[13] त्वा बाहुभ्यामुद्यच्छे इत्युद्यच्छति ॥ २७ ॥ बृहस्पतेर्मूर्ध्ना हरामीति शिरस्याधायोर्वन्तरिक्षं वीहीति व्रजति ॥ २८ ॥ अदित्यास्त्वा पृष्ठे साद-

VIII. 4 2 Vārttika is a different word.

1 MS I. 1 1

2 The ms first hand ०परश्व, second hand ०पर्शुं

3 MS IV. 1. 2 2 12

4 MS I. 1 2

5 Derived from KS XXXI 1 1. 11.

6 The mantra and its viniyoga occur only in Hir I. 5 82.

7 MS IV. 1. 2 3. 9.

8 MS IV. 9 3 123 8, TS I 1. 2. 2

9 MS IV. 1. 2 3 10–11 मार्षम्. Cp TS ib

10 The ms अदित्यै (influenced by TS).

11 Mān I. 1 1. 42 सुसमृते is to be emended. Cp TS I. 1 2. 2, from where the mantra is derived

12 Though derived from MS IV. 1. 2 3 20–21 it is read sakalapāthe na both here and in Mān.

13 ! The ms. इत्यारमन्तीन्द्रस्य first hand, इत्यारमनिन्द्रस्य second hand.

यामीति[1] पश्चादाहवनीयस्य पारीधिदेशे ऽनधः सादयित्वा [ बर्हिरसि[3] ] देवंगमसि[4]त्युपरि निदधाति ॥ २९ ॥ पालाशं खादिरं वाष्टादशदारुमिध्मं संनह्यति त्रींश्च परिधीन्सहशल्कान्कार्ष्मर्यमयान्विल्वपलाशखादिररोहीतकोदुम्बराणां वा ॥३०॥ स्थविष्ठो मध्यमो वर्षीयानणीयान्दक्षिणार्ध्यो ह्रसिष्ठो ऽणिष्ठ उत्तरार्ध्यः ॥ ३१ ॥

यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् ।

ततस्त्वामेकविंशतिधा संभरामि सुसंभृता ॥

इति संभृत्य यज्ञायुरनुसंचरानिति सहमूलैर्दर्भैः संनह्यति ॥ ३२ ॥ कृष्णो ऽस्याखरेष्ठो. ॥ देवपुरश्चरस ऋध्यासं त्वेत्युपरि निदधाति ॥ ३३ ॥

इतीष्टिसूत्रे द्वितीयाध्याये प्रथमं खण्डम् ॥

दर्भाणां वेदं करोति वत्सज्ञुं पशुकामस्य त्रिवृतं ब्रह्मवर्चसकामस्य मूतकार्यमन्नाद्यकामस्य ॥ १ ॥ [प्र]सव्यं शुल्वं कृत्वा वत्सज्ञुं निवेष्ट्य वेदाग्रे शुल्वं निधाय त्रिर्वेदशिरः संनह्यत्युत्तरमुत्तरं प्रदक्षिणम् ॥ २ ॥ प्रादेशमात्रे शुल्वात्परिवास्योत्करे मूलानि गमयति ॥ ३ ॥ अत्रैवामावास्यायां वेदिं करोति सर्वं सद्यः पौर्णमास्याम् ॥ ४ ॥ शाखाया अन्तर्वेदि पलाशानि विशात्य मूलतः प्रच्छिद्यान्तर्वेदि न्यस्येदुपवेशं च कुर्वीत ॥ ५ ॥ शाखाया दर्भमयं पवित्रं करोत्यग्रन्थि त्रिवृदविदलम् ॥ ६ ॥ हुते ऽग्निहोत्रे परिसमूह्य परिस्तीर्योत्तरतो गार्हपत्यस्य पात्रेभ्यः संस्तीर्य द्वंद्वं सांनाय्यपात्राणि प्रयुनक्ति दोहनं निदाने कुम्भीं शाखा पवित्रं च ॥ ७ ॥ बर्हिषः पवित्रे कुरुते समावप्रच्छिन्नप्रान्तौ दर्भौ प्रादेशमात्रौ ॥ ८ ॥ पवित्रे स्थो वैष्णवे[9] इत्योषध्यौ छित्त्वा विष्णोर्मनसा पूते स्थ इत्यद्भिस्त्रिरुन्मृज्य प्रोक्षणीः संस्कुरुते ॥ ९ ॥ देवो व सवितोत्पुनात्विति[11] गायत्र्या त्रिः पच्छ उत्पूय देवीरापो ऽग्रेगुवे[12] इत्यभिमन्त्र्य शुन्धध्वं दैव्याय कर्मणे इति पात्राणि त्रिः प्रोक्षति ॥ १० ॥ उपसृष्टां मे प्रब्रूतात् ॥ विहारं च गां चोपसृष्टामन्तरेण मा संचारिषुरिति[15] संप्रेष्यति ॥ ११ ॥ निरस्तं रक्षो निरस्ता अरातय इति कुम्भीं निष्टप्य वसुनां

1 MS I. 1. 2.

2 Mān I. 1. 1. 50 अनो ऽधो वा is corrupt.

3 The majority of Mān mss also leave out बर्हिरसि.

4 MS IV. 1 2 4. 4.

5 The ms first hand भूत्वा.

6 MS I. 1. 11: 7. 6

7 MS IV. 9. 1 122. 6.

8 The ms •र्धायं.

9 The ms वैष्णव्या.

10 In Mān I. 1 3. 13 ओषध्या वैष्णवे स्थ इति छिनत्ति the word ओषध्या does not form a part of the mantra

11 MS IV. 1. 6 7. 15

12 MS I. 1. 6 3 8.

13 MS I. 1. 4. 2 12.

14 MS I. 1. 3. 2. 5.

15 Thus the ms first hand, second hand •चारिषेति (after Āp I. 12. 15

पवित्रमसीति[1] प्रागग्रं पवित्रमवदधाति ॥ १२ ॥ द्यौरसीत्यभिमन्त्र्य मातरिश्वनो घर्म[1] इत्यधिश्रयति ॥ १३ ॥ अन्वारभ्य वाचं यच्छति ॥ १४ ॥ न रिक्तमवसृजति ॥ १५ ॥ पोषाय त्वेति[1] वत्समवसृज्यमानमनुमन्त्रयते ॥ १६ ॥ अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्त्विति संगच्छमानाम् ॥ १७ ॥ अदित्यौ रास्नासीति[2] निदीयमानाम् ॥ १८ ॥ ऊर्जस्वतीर्घृतवतिपिन्वमाना जीवा जीवन्तीरुप वः सदेमेत्युपसन्नम्[3] ॥ १९ ॥

उरुं दुहन्ति कलशं चतुर्बिलमिडा धेनुं[4] मधुमतीं[5] स्वस्तये ।

तदिन्द्राग्नी जिन्वतं सूनृतावत्तद्यजमानममृते स्वर्गे लोके दधातु ॥

इति धाराघोषम् ॥ २० ॥ दोग्धारं पृच्छति कामधुक्ष इति । अमूमिति नामादिशति ॥ २१ ॥ सा विश्वायुरस्त्वसाविति[1] नामग्राहमनुमन्त्रयते । सा विश्वभूरिति द्वितीयाम् । सा विश्वकर्मेति[1] तृतीयाम् ॥ २२ ॥ दुग्धमवनयति ॥ २३ ॥ तिस्रो यजुषा दोहयति तिस्रस्तूष्णीम् ॥ २४ ॥ तिसृषु दुग्धासु त्रिरुच्चैर्वाचं विसृजते ॥ २५ ॥ बहु दुग्धीन्द्राय देवेभ्यो हविरिति संप्रेष्यति । महेन्द्रायेति महेन्द्रयाजिनः ॥ २६ ॥ विसृष्टवागनन्वारभ्योत्तरा दोहयति ॥ २७ ॥

संपृच्यध्वमृतावरीरूर्मिणी[5] मधुमत्तमाः ।

पृञ्चतीः पयसा पयो मन्द्रा धनस्य सातये[6] ॥

इति कुम्भ्यां संक्षालनमानयति ॥ २८ ॥ हुत. स्तोक इति स्कन्नप्रायश्चित्तं जपति ॥ २९ ॥ वर्त्म कुर्वन्नुदगुद्वासयति—दृंह गा दृंह गोपतिं मा ते[7] यज्ञपती रिषदिति ॥ ३० ॥ शीतदुग्धं दध्यातनक्ति द्वयोरेकस्या वा दुग्धेन पूर्वेद्युर्निहितेन ॥ ३१ ॥ इन्द्राय त्वा भागं सोमेनातनच्मीत्यातनक्ति । महेन्द्रायेति महेन्द्रयाजिनः ॥ ३२ ॥ यवागूरग्निहोत्रम् । तस्याः पिण्डं प्रतिनयति—अदस्तमसि विष्णवे त्वेति[8] ॥ ३३ ॥ विष्णो हव्यं रक्षस्वेति[1] निधायापो[9] जागृतेति[1] सोदकेन पात्रेणामृन्मयेनापिदध्यात् ॥ ३४ ॥ यदि मृन्मयं स्याच्चूर्णं काष्ठं वावदध्यात् ॥ ३५ ॥ तेन घर्मेण प्रातर्दोहाय वत्सानपाकरोति ॥ ३६ ॥ सोमयाजिनो ऽमावास्यायां नित्यं संनयनं यथाकाम्यसोमयाजिनः ॥ ३७ ॥ शुश्रुवान्ग्रामणी राजन्यं इति गतश्रियः ॥ ३८ ॥ और्वो गौतमो भारद्वाज इति महेन्द्रं यजेरन्गतश्रियश्च ॥ ३९ ॥

1 MS I, 1, 3.

2 The ms अदित्यै (influenced by TS). So also once before.

3 The ms °संनाम्, but the substantive referred to is दोग्धारम्. Cp Mān I. 1, 3, 18.

4 The ms second hand देवीं.

5 The ms °रूर्मिणीर्, which is after the Taittiriyas.

6 The mantra though read sakalapāthena is from MS IV. 1. 3. 5, 8-9.

7 Other Sūtras वो.

8 MS IV, 1, 3, 5, 12.

9 The ms second hand निधाय हविष्पु.

10 Derived from TS II, 5, 4, 4.

इतरे सँवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतये ऽष्टाकपालं निरुप्य महेन्द्रँ यजेरन् ॥४०॥

इतीष्टिसूत्रे द्वितीये ऽध्याये द्वितीयं खण्डम् ॥

अमावास्यायामपराह्णे पिण्डपितृयज्ञाय प्राग्दक्षिणैकोल्मुकं प्रणयेत्—
अपेतो[1] यन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टान्लोकात्प्रणुदात्वस्मात् ॥

इति ॥ १ ॥ उत्तरतः प्रणीतस्य वेदिमुद्धन्ति[2] स्फ्येन सकृत्पराचीनमपेतो यन्त्वसुरा ये पितृषद इति ॥ २ ॥ प्राग्दक्षिणाग्रैर्दक्षिणाग्निं परिस्तीर्य[3] दक्षिणतो ऽग्नेरेकैकं पात्राणि प्रयुनक्ति चरुं मेक्षणं पिण्डनिधानमुलूखलमुसलं कृष्णाजिनं शूर्पम् ॥ ३ ॥ सकृदाच्छिन्नस्य बर्हिष एकपवित्रं कृत्वा तूष्णीं प्रोक्षणीँ सँस्कृत्य पात्राणि सकृत्प्रोक्षति ॥ ४ ॥ एकपवित्रमन्तर्धायाग्निष्ठादधि चरुणा व्रीहीन्निर्वपति पूरयित्वा निमृज्य कृष्णाजिने ऽध्यवघ्नन्ति प्राग्दक्षिणमुखा परापावम्[4] ॥ ५ ॥ सकृत्फलीकृतान्दक्षिणाग्नौ श्रपयति प्रसव्यमुदायावं जीवतण्डुलम् ॥ ६ ॥ शृतं प्रतिनयति ॥ ७ ॥ घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्य दक्षिणत उद्वास्यैकस्फ्यायामोसिच्य[5] सकृदाच्छिन्नं प्रोक्षति ॥ ८ ॥ एकस्फ्यामास्तीर्य चरुं मेक्षणं पिण्डनिधानमित्येकैकं बर्हिर्प्यासादयति ॥ ९ ॥ परिश्रयत्यादित्यसकाशात्[6] ॥ १० ॥ कशिपुं सोपधानं पश्चादग्नेरास्तीर्य पितृनावाहयति— एत पितर इति ॥ ११ ॥ यज्ञोपवीती मेक्षणेन तिस्र आहुतीर्जुहोति—सोमाय पितृमते स्वधा नमः ॥ यमायाङ्गिरस्वते स्वधा नमः ॥ अग्नये कव्यवाहनाय स्वधा नम इति दक्षिणां दक्षिणाम् ॥ १२ ॥ उदकलेपं मेक्षणमग्नावनुप्रहरति ॥ १३ ॥ यजमानो ऽत ऊर्ध्वं परेतन पितरँ[7] इति त्रिरपः परिषिञ्चति त्रिः पात्रं प्रतिपरिहरति ॥ १४ ॥ त्रीनुदकाञ्जलीन्निनयति— आचामन्तु पितर इति ॥ १५ ॥ बर्हिषि त्रीन्पिण्डान्निदधाति दक्षिणं दक्षिणम्—एतत्ते मम पितरसाविति पितुर्नाम गृहीत्वैतत्ते मम पितामहासाविति पितामहस्यैतत्ते [मम] प्रपितामहासाविति प्रपितामहस्य ॥ १६ ॥ ये चात्र त्वामनु तेभ्यः स्वधेत्यनुपजेत् ॥ १७ ॥ एतत्ते ऽमुष्य पितरेतत्ते ऽमुष्य पितामहैतत्ते ऽमुष्य प्रपितामहेति प्रवसति यजमाने ऽध्वर्युः ॥ १८ ॥ यदि नामानि न जानीयात्स्वधा पितृभ्यः पृथिवीषद्भ्यः स्वधा पितृभ्यो ऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्य इति निदध्यात् ॥ १९ ॥ लुप्येत जीवत्पितुः पिण्ड-

1 The ms second hand अप, which is the reading of the Taittirīyas and of Mān I. 1. 2 8.
2 The ms वेदिमूर्ध्वं त्रि. Cp Āp I. 8. 8
3 The ms विसृज्य. Cp Man I. 1. 2
3, Āp I. 7. 8.
4 The ms ०मुखो नपावत्रम्
5 The ms ०स्फ्यामा०.
6 ? The ms हविष्या० (for हविषा० ?).
7 MS I. 10. 3. 143 8.

निधानम् ॥ २० ॥ न जीवन्तमतिदद्यात् ॥ २१ ॥ जीवत्पितामहश्चेत्पितुरेकः पिण्डः ॥ २२ ॥ लेपः[1] पित्रे ॥ २३ ॥ तयोदकमाञ्जनाभ्यञ्जने च ॥ २४ ॥ बर्हिषि लेपं निमार्ष्टि—यात्र पितरः स्वधा तया यूयं यथाभागं मादयध्वमिति ॥ २५ ॥ अत्र पितरो मादयध्वमित्युदङ्ङावृत्या तमितोरासित्वा येह पितर ऊर्जस्वे वयं ज्योग्जीवन्तो भूयास्मेत्यमीमदन्त पितरे इति परिश्रितं प्रपद्याञ्जनाक्ताः शलाकाः प्रतिपिण्डं निदधाति—आङ्क्ष्वासावित्याञ्जनेनाभ्यङ्क्ष्वासावित्यभ्यञ्जनेन च ॥ २६ ॥ एता युष्माकं पितर इत्यूर्णा दशाँ वा न्यस्यति । इमा अस्माकमित्यवशिष्टा अवेक्षते ॥ २७ ॥ लोमोत्तरवयसि न्यस्येत्—अतो न. पितरो ऽन्यन्मा योष्टेति[3] ॥ २८ ॥ तेन धर्मेण परिषिच्य मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इति बर्हिषि त्रीनुदकाञ्जलीन्निनीय निह्नुते ऽञ्जलिं कृत्वा नमो व पितरो मन्यवे[4] । नमो वः पितर इषे । नमो वः पितर ऊर्जे । नमो वः पितरः शुष्माय । नमो व· पितरो रसाय । नमो वः पितरो बलाय । [ नमो वः पितरो यज्जीवं तस्मै । नमो वः पितरो यद्घोरं तस्मै । स्वधा वः पितरो नमो[5] ] नमो वः पितरः ॥ ये ऽत्र पितरः प्रेता युष्मांस्ते ऽनु य इह पितरो जीवा अस्मांस्ते ऽनु ॥ ये ऽत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूयास्थ य इह पितरो जीवा अहं तेषां वसिष्ठो भूयासमिति ॥ २९ ॥ शेषमवजिघ्रेत् । आमयाव्यन्नाद्यकामो वा प्राश्नीयात् ॥ ३० ॥ प्रजापते न त्वदित्युत्तिष्ठति[7] ॥ ३१ ॥ परेतेति[8] यजमानः प्रवाहणीं जपति ॥ ३२ ॥ उभौ मनस्वतीमिनो न्वाहुवामहे[9] इति तिस्रः ॥ ३३ ॥

वयं सोम व्रते तव मनस्तनूषु बिभ्रत ।
प्रजावन्तः सचेमहि[11] ॥

इति च । अक्षन्नमीमदन्तेति[12] च ॥ ३४ ॥ प्राप्यैते अग्न इधामहीति[13] गार्हपत्य-

1 ! The ms second hand लोप·.

2 MS I. 10. 2.

3 The ms पितरो न्या मा यूष्टेति first hand, पितरो मा योष्टेति second hand.

4 This formula as well as नमो॰ बलाय are not from MS. The rest upto नमो नमो वः पितरः is derived from MS I. 10. 3 143. 3 6.

5 The words enclosed within brackets are supplied on the authority of Hemādri, Śrāddhakalpa page 1460 (See Prof. Raghu Vira's edition of VārGr, Introduction p 3) and MS ib.

6 MS II. 6. 12 72. 4.

7 Hemādri, Śraddhakalpa p 1474 ॰दित्युत्तिष्ठते.

8 Hemādri ib परेत पितर इति॰. Cp Āp I. 10. 7.

9 The ms first hand and Hemādri न्वाह॰. The second hand न्वाहु॰ is after the Saṃhitā.

10 MS I. 10. 3: 143. 15.

11 The verse is nowhere else applied in Pindapitṛyajña.

12 MS I. 10. 3. 143. 12.

13 Perhaps प्राप्य means the same as प्रत्येत्य.

14 MS II. 13. 7. 156. 14.

मुपतिष्ठते ॥ ३५ ॥ मध्यमं पिण्डं पत्नी प्राश्नीयात्—

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।

यथायं पुमान्स्यात् ॥

इति । इतरावग्नावनुप्रहरेद् ब्राह्मणो वाश्नीयादपो वा गमयेत् ॥ ३६ ॥ द्वे द्वे अभ्युदय पात्राणि प्रत्याहरति ॥ ३७ ॥ औपासनं गार्हपत्यदक्षिणाग्निस्थानीयं कृत्वाप्यनाहिताग्निः पिण्डपितृयज्ञं कुर्वीत ॥ ३८ ॥

इतीष्टिसूत्रे द्वितीये ऽध्याये तृतीयं खण्डम् ॥

प्रातर्हुते ऽग्निहोत्रे वेषाय वामिति[1] पाणी प्रक्षाल्याग्नीन्परिस्तीर्य दक्षिणतो ब्रह्मयजमानाभ्याँ स्तीर्त्वा संततं पृष्ठ्याँ स्तृणाति गार्हपत्यादध्याहवनीयाद् यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामीति ॥ १ ॥ उत्तरतः पृष्ठ्यायाः पात्रेभ्यः सँस्तीर्य द्वंद्वं पात्राणि प्रयुणक्ति स्फ्यं कपालान्यग्निहोत्रहवणीँ[2] शूर्पं कृष्णाजिनँ शम्यामुलूखलमुसलं दृषदुपलं खादिरँ स्रुवं पालाशीं जुहूमाश्वत्थीमुपभृतँ वैकङ्कतीं ध्रुवाँ शमीमयीवारत्निमात्रीः ॥ २ ॥ वरणमयानि शिष्टानि पात्राणि ॥ ३ ॥ पात्रीमिडाचमसँ वेदँ वेदप्रस्वौन्कुटरुमाज्यस्थालीं चरुं प्राशित्रहरणं प्रणीतापात्रं पत्नीयोक्त्रं प्रातर्दोहिकानि ॥ ४ ॥ चमसेनापः प्रणयति । काँस्येन ब्रह्मवर्चसकामस्य दोहनेन पशुकामस्य मृन्मयेन प्रतिष्ठाकामस्यायसेनाभिचरतः ॥ ५ ॥ वानस्पत्यो ऽसीति चमसमादाय देवेभ्यः शुन्धस्वेति[4] चमसं प्रक्षालयति ॥ ६ ॥ पार्थिवमसि ॥ देवेभ्य. शुम्भस्वेतीतरान् ॥ ७ ॥ पश्चाद् गार्हपत्यस्य पवित्रान्तरापो गृह्णीते पृथिवीं मनसा ध्यायन्[5]—

यद्वो रेवती रेवत्यँ यद्वो हविष्या हविष्यम् ।

यद्व ओजो यच्च नृम्णं तँ व ऊर्मिं मधुमन्तं देवयज्यायै जुष्टं गृह्णामि ॥

इति ॥ ८ ॥ प्रोक्षणीर्धर्मैः सँस्कृत्य ब्रह्मन्नप प्रणेष्यामीत्यामन्त्र्यावधाय पवित्रे स्फ्येन सह प्रणयति समं प्राणैर्धारयमाणः—को व प्रणयति स व प्रणयतु ॥ कस्मै व प्रणयति तस्मै वः प्रणयतु ॥ बृहस्पतिर्वं प्रणयतु ॥ पोषाय त्वेति[6] ॥ ९ ॥ उत्तरत आहवनीयस्य स्फ्येनोद्धत्य सादयति—को वो युनक्ति स वो युनक्तु ॥ कस्मै वो युनक्ति तस्मै वो युनक्तु ॥ बृहस्पतिर्वो युनक्तु ॥ विश्वेभ्य. कामेभ्यो देवयज्याया इति ॥ १० ॥

1 MS I, 1, 4 2 12

2 The ms क्पालम॰.

3 Thus the ms, It is the same as वेदप्रलवान्

4 MS I, 2 8,

5 Cp MS I, 4, 10 59 5 यद्यपो गृह्णीयादिमां तर्हि मनसा ध्यायेत्.

6 ? Probably पोषाय व इति. Cp Āp I, 16, 3 end, पोषाय त्वा is from MS I, 1, 3 2, 7.

अध्वर्युयजमानौ वाचँ यच्छेतामा हविष्कृतः ॥ ११ ॥ परिस्तरणैः स्थाल्याद्य पवित्रपाणि· पात्राणि संमृशति—सँसीदन्ता दैवीर्विशे इति ॥ १२ ॥ वानस्पत्यासीत्य-ग्निहोत्रहवणीमादत्ते ॥ १३ ॥ वर्षवृद्धमसीति[1] शूर्पम् ॥ १४ ॥ उर्वन्तरिक्षँ वीहीति[1] व्रजति ॥ १५ ॥ प्रत्युष्टँ रक्ष इत्याहवनीये प्रतितप्य यजमान हविर्निर्वप्स्यामीति यज-मानमामन्त्रयते ॥ १६ ॥ यदि प्रवसेदग्ने [ हविर् ] निर्वप्स्यामीति ब्रूयात् ॥ १७ ॥ व्रीह्याग्रयणेनेष्ट्वा व्रीहिभिर्यजेता यवेभ्यो[2] यवैर्वा व्रीहिभ्यः[3] ॥ १८ ॥ पश्चादग्निँ शकटँ योग्यकृतं[4] छदिष्मत्सपरिणद्कम् ॥ १९ ॥ तस्मादधि निर्वपति ॥ २० ॥ पात्र्या वा स्फ्यमवधायानसान्मन्त्राञ्जपन्[5] ॥ २१ ॥ धूरसीति[6] धुरमभिमृशति ॥ २२ ॥ देवानामसि वह्नितममित्युत्तरामीषामालभ्य जपति ॥ २३ ॥ विष्णो क्रमो ऽसीति[7] पादमादधाति ॥ २४ ॥ अहुतमसीत्यारोहति ॥ २५ ॥ उरु वातायेत्यवसारयति ॥ २६ ॥ मित्रस्य वश्चक्षुषा प्रेक्षे इति हविष्यान्प्रेक्षते ॥ २७ ॥ अग्निहोत्रहवण्यामवधाय मुष्टिना निर्वपत्यग्निहोत्रहवण्याः शूर्पे—देवस्य वै इत्यग्नये वो जुष्टान्निर्वपाम्यमुष्मै वो जुष्टानिति[7] यथादेवतम् । निर्यजुषा तूष्णीं चतुर्थम् ॥ २८ ॥ इद देवानामिति[8] निरस्ता-नभिमृशति । इदमु न सहेत्यैवशिष्टान् ॥ २९ ॥ गोपीथाय त्वा रक्षायै त्वा नारात्यौ इति निरुप्तान् ॥ ३० ॥ दृँहन्ता दुर्या[9] इत्यवरोहति ॥ ३१ ॥ स्वाहा द्यावापृथिवीभ्यामिति[9] स्कन्नप्रायश्चित्त जपति ॥ ३२ ॥ निर्वरुणस्येति[9] शकटं निष्क्रामयति ॥ ३३ ॥ स्वरभिव्यख्येशमित्याकाशं प्रेक्षते ॥ ३४ ॥ ज्योतिर्वैश्वानरमित्याहवनीयम् ॥ ३५ ॥ उर्वन्तरिक्षमन्विहि ॥ अदित्यास्त्वोपस्थे सादयामीति पश्चाद् गार्हपत्यस्य सादयति ॥ ३६ ॥ अग्ने हव्यँ रक्षस्वेति पुर उपसादयति[10] ॥ ३७ ॥ अनिर्मृष्टायामग्निहोत्रहवण्यां प्रोक्षणीः[10] सँस्कृत्य हविर्प्य प्रोक्षत्यनभिप्रोक्षन्नग्निम्—अग्नये वो जुष्टान्प्रोक्षाम्यमुष्मै वो

1 MS I 1 4

2 ! Thus tentatively emended The ms देवेभ्यो

3 ! The ms यवै सव्रीहिभ्य first hand, यवैर्वा व्रीहिभि second hand
As emended the meaning might be *he should use rice as sacrificial* substance until (the ripening of) the barley, or (likewise) barley till (the ripening of) rice.

4 ! The ms योग्यकृतं first hand, योग्याकृतं *second hand* The idea meant to be commun icated is नद्धयुगम्.

5 [illegible] with which the śakata (or anas) is addressed Cp Mān I 2 1 23 अनोमन्त्रान् and Āp I 18 7 शकट-मन्त्रान्

6 The ms first band धुरावभि॰.

7 MS I 1 5

8 *Thus the ms first hand,* the second hand रक्षायै त्वा नारात्या.

9 The ms ॰द॰ first hand, अभि-विह्वलेयम् second hand Cp *TS* I 1 4 2 अभिविह्वलेयम्

10 The sūtra is verbally taken over from MS IV. 1 5

जुष्टानिति यथादेवतम् । त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ३८ ॥ पात्राणि च यद्वो ऽशुद्ध आलेभे इति त्रिरुत्तानानि पर्यावर्त्य ॥ ३९ ॥ अदित्यास्त्वगसीति कृष्णाजिनमादायावधूतं रक्ष इत्युत्करे त्रिरवधूनोत्युपरिष्टाद्ग्रीवमुदगाशसनम् ॥ ४० ॥ अदित्यास्त्वगसि प्रति त्वादित्यास्त्वग्वेत्त्विति ॥ ४१ ॥ पश्चादुत्करस्यास्तृणाति प्रत्यग्ग्रीवमुत्तरलोम प्रत्यग्भसदमभिभुजन् ॥ ४२ ॥ अनुत्सृजन्कृष्णाजिनमुलूखलमादधाति— पृथुग्रावासीति ॥ ४३ ॥ न रिक्तमवसृजति ॥ ४४ ॥ अग्नेर्जिह्वासीति हविष्यान्वपति । त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ४५ ॥ बृहद्ग्रावासीति मुसलमादाय । ऊर्ध्वसूर्वानस्पत्य इति वा ॥ ४६ ॥ अपहतं रक्षो हविष्कृदेहीत्यवहन्ति । अपहतो ऽघशंसो हविष्कृदेहीति द्वितीयम् । अपहता यातुधाना हविष्कृदेहीति तृतीयम् ॥ ४७ ॥ हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य ॥ ४८ ॥ पत्न्यवहन्ति ॥ ४९ ॥ कुटरुरसीत्याग्नीध्रः कुटरुर्भादायेषमावदेति दृषदमाहन्ति । ऊर्जमावदेति द्वितीयं रायस्पोषमावदेत्युपलाम् ॥ ५० ॥ त्रिरेतेन धर्मेण ॥ ५१ ॥ वर्षवृद्धमसीति शूर्पमादत्ते ॥ ५२ ॥ वर्षवृद्धाः स्थेति हविष्यान्प्रेक्षते ॥ ५३ ॥ प्रति त्वा वर्षवृद्धं वेत्त्वित्युद्वपति ॥ ५४ ॥ परापूतं रक्ष इत्युत्तरे निष्पुनाति ॥ ५५ ॥ पुरोडाशकपाले तुषानोप्याधस्तात्कृष्णाजिनस्योपास्यति— प्रविद्धो रक्षसां भाग इति ॥ ५६ ॥ इदमहं रक्षो ऽवबाध इदमहं रक्षो ऽधमं तमो नयामीति पार्ष्ण्या तुषानवबाधते ॥ ५७ ॥ अपः स्पृष्ट्वा विविनक्ति—देवो व. सविता विविनक्तु [सु]विचा विविच्यध्वमिति ॥ ५८ ॥ विविक्तानावपति ॥ ५९ ॥ देवेभ्यः शुन्धध्वमिति त्रिः फलीकरोति ॥ ६० ॥ तेन धर्मेणानभिभुजन्कृष्णाजिनमास्तीर्य धिषणासि पार्वतीति दृषदमादधाति ॥ ६१ ॥ धिषणासि पार्वती प्रति त्वा पार्वती वेत्त्वित्युपलाम् ॥ ६२ ॥ अदित्याः स्कम्भो ऽसीति शम्यामुपकर्षति पश्चादुदीचीनकुम्बाम् (?) ॥ ६३ ॥ धान्यमसीत्यधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ६४ ॥ प्राणाय त्वेति प्राचीमुपलां प्रकर्षत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्ये व्यवधारयति ॥ ६५ ॥ दीर्घामनु

1 MS I. 1, 6.

2 The ms उपरिष्टाद्ग्रीवमुद्गाशासनम् first hand, उपरिष्टाद्ग्रीवं विशासनम्. second hand.

3 The ms भसदभिभुजमनभिसृजन् first hand, भसदमनुत्सृजन् second hand. See also sūtra 61 and the corresponding Mān passage.

4-4 The ms °पसतं रक्षोवहविष्कृ° first hand, ऊर्ध्वसूरासि वानस्पत इति वाव रक्षो हविष्कृ° second hand. For the reading of second hand see Hir I. 17. 126.

5 MS IV. 1. 6 8. 8.

6 The ms second hand अश्मानमा°.

7 MS I. 1. 7.

8 MS IV. 1. 7: 9. 1–3.

9 Thus emended after Āp I. 21. 3. The ms पश्चादुदीचीन्गुल्मान्.

प्रधृतिमिति[1] सँस्थापयति ॥ ६६ ॥ मित्रस्य चक्षुषावेक्षे[2] इति पिष्टान्यवेक्षते ॥ ६७ ॥ देवो वः सविता हिरण्यपाणिरुपगृह्णात्वित्यवशीर्यमाणान्युपगृह्णाति ॥ ६८ ॥ दासी पिनष्टि पत्नी वा ॥ ६९ ॥ अणूनि कुरुतादिति संप्रेष्यति ॥ ७० ॥

इतीष्टिसूत्रे [द्वितीये ऽध्याये] चतुर्थं खण्डम् ॥

इति द्वितीयो ऽध्यायः ॥

---

1 The ms प्रसि°, perhaps under the influence of TS.

2 MS I. 1 7

धृष्टिरसि ब्रह्म यच्छेत्युपवेपमादाय गार्हपत्यादङ्गारौ निर्वर्तयति—अपाग्ने ऽग्निमामादं जहीति[1] ॥ १ ॥ निष्क्रव्यादं नुदस्वेत्येन्यतरं निरस्यति ॥ २ ॥ आग्ने[2] देवयजनँ वहेति[1] द्वितीयमवँस्थाप्य तस्मिन्कपालमुपदधाति—ध्रुवमसि पृथिवीं दृँहेति[1] ॥ ३ ॥ अनभिसृजन्कपालमङ्गारमधिवर्तयति—निर्दग्धँ रक्षो इति ॥ ४ ॥ धरुणमसीति[1] पूर्वमुपदधाति[1]। धर्त्रमसीति[1] पूर्वार्धम्। धर्मासीति[1] मध्यमाद्दक्षिणम्। चिदसीत्युत्तरम्। परिचिदसीति[1] दक्षिणार्धात्पूर्वम्। विश्वासु दिक्षु सीदेत्यपरम्। सजातानस्मै यजमानाय परिवेशय सजाता इमँ यजमानं परिविशन्त्वित्युत्तरार्धात्पूर्वम् ॥ ५ ॥ अष्टाकपालमाग्नेय एकादशकपाल ऐन्द्राग्न ऐन्द्रश्च ॥ ६ ॥ एतेन धर्मेणोत्तरस्मिन्नष्टावुपधाय *चितः स्थ परिचित* स्थेति[4] शेषमुपदधाति ॥ ७ ॥ वसूनाँ रुद्राणामित्यङ्गारानध्यूह्य तप्ताभ्यश्चरुमधिश्रित्य प्रातर्दोहं दोहयति यथा सायंदोहम् ॥ ८ ॥ उदगग्रं[5] पवित्रमवदधाति ॥ ९ ॥ शृतं करोति नातनक्ति ॥ १० ॥ उद्वास्य प्रातर्दोहं पिष्टानि सँवपति निष्टप्योपवातायां पात्र्यां पवित्रे अवधाय वाग्यतो देवस्य वै इत्यग्नये [ वो ] जुष्टान्सँवपाम्यमुष्मै वो जुष्टानिति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ११ ॥ तता अपो[8] मदन्तीरुत्पूय हविरुत्पुनाति पच्छो गायत्र्या ॥ १२ ॥ आहरति स्रुवेण प्रणीतानां वेदमुपयामं कृत्वा ॥ १३ ॥ ताभिः सँसृजति—समापा ओष-

1 MS I. 1. 8.

2 The ms, MS Padapātha and Mān I 2 3. 3 अग्ने.

3 The ms •मप•.

4 MS IV. 1. 8. 10. 9–10.

5 Cp I. 2 2. 12 प्रागग्रं.

6 The ms निष्टप्त्वोपवातायां first hand, निष्टप्योपपूतायां *second hand* Cp Mān I. 2 3 10 निष्टप्योप्यमानायां, Āp I. 24. 1 निष्टप्तोपवातायां. Hir the same as the emendation above.

7 MS I 1. 9. 4. 16.

8 The ms आपो.

9 The ms वेदमुपयां first hand, वेदेनोपयम्य second hand. Cp Āp I. 24. 5 वेदेनोपयम्य (for वेदमुपयामं कृत्वा), Mān *I. 2. 3. 13* वेदोपयाम· स्रुवेण प्रणीतानामाहरति.

धीभिरिति[1] ॥ १४ ॥ अद्भि:[2] परिप्रजाता[3] स्थ समद्भि: पृच्यध्वामिति मदन्तीभिः ॥ १५ ॥ सीदन्तु विशो इति संनयति ॥ १६ ॥ मखस्य शिरो ऽसीति[3] पिण्डमभिमन्त्र्य पूषा वाँ विश्ववेदा विभजतु यथाभागँ व्यावर्त्तयामिति समौ करोति ॥ १७ ॥ इदममेरित्याग्नेयमिदमग्नीषोमयोरित्य[ग्नीषोमीयम]भिमन्त्र्य पौर्णमास्याम् ॥ १८ ॥ यथादेवतममावास्यायाम् ॥ १९ ॥ घर्मो ऽसीत्यधिश्रयति ॥ २० ॥ उरु प्रथस्वेति[4] प्रथयति यावत्कपालं कूर्मस्यानुरूपमश्वशफमात्रम् ॥ २१ ॥ सं ते तन्वा तन्व पृच्यन्तामित्यधिज्वारयंल्लेपेन परिमार्ष्टि ॥ २२ ॥ दक्षिणत आज्यं निर्वपति ॥ २३ ॥ अदितिरसि नाछिभपनेत्याज्यस्थालीमादाय दक्षिणाग्नौ विलाप्यँ पवित्रान्तरा पृथ्वे[5] पयो ऽस्यग्रेगुवस्तस्य ते ऽक्षीयमाणस्य पिन्वमानस्य जिन्वमानस्येष ऊर्जे जुष्टं निर्वपामि देवयज्याया इति[7] ॥ २४ ॥ परि वाजपतिरित्याज्यँ हविश्च त्रिः पर्यग्नि[8] करोति सह लेपेन ॥ २५ ॥ देवस्त्वा सविता श्रपयत्वित्युल्मुकेनाभितप्याभे ब्रह्म गृहीष्वेत्युल्मुकमवसृज्य[9] दर्भैस्त्वचं ग्राहयति—अग्निष्टे त्वचं मा हिँसीदित्यनपोहन्ज्वालान्[10] ॥ २६ ॥ सं ब्रह्मणा पृच्यस्वेति वेदेन सहाङ्गारं भस्माभ्यूहति ॥२७॥ अविदहन्त श्रपयतेत्यङ्गारानभ्यूह्य वाचँ विसृजते ॥२८॥ अन्तर्वेदि प्रागुदीचीः स्फ्येन तिस्रो लेखाः कृत्वा [ता]सु लेपं निनयत्यसँसारयन्[11]—एकताय स्वाहा द्वितीय स्वाहा त्रिताय स्वाहेति पर्यायैराहवनीयादुल्मुकेनाभिताप्य ॥ २९ ॥ वेदिं करोति ॥ ३० ॥ खादिरँ स्फ्यं मुष्टिलमाँदत्ते [सा]वित्रेण[12] ॥ ३१ ॥ इन्द्रस्य बाहुरसीति[13] दर्भेण संमृज्य पृथिव्या वर्मासीति पूर्वस्मिन्वेदितृतीये दर्भे[14] निधाय स्फ्येन तिर्यक्छिनत्ति त्रिचतुर्थे—पृथिवि देवयजनीति[13] ॥ ३२ ॥ व्रजं गच्छ गोस्थानमिति[13] तृणाग्रमादत्ते पाँसूँश्चाप्रात्वा ॥ ३३ ॥ वर्षतु ते पर्जन्यै इति वेदिमवेक्षते ॥ ३४ ॥ बधान देव सवितरिति[13] स्फ्येन सतृणान्पाँसून्हरति ॥ ३५ ॥ उत्तरत आग्नीध्रस्तुपान्वेदमूलानीत्युत्करं परिगृह्णाति ॥ ३६ ॥

1 MS I. 1 9.

2 It is very striking that even Āp I. 24, 5 has the faulty reading अद्भि instead of अद्भ्य, and this against its own Saṃhitā Mān I, 2 3 14 has preserved the correct form

3 MS IV. 1. 9 11. 5–6

4 The ms •भिलेवत्तीरयन् first hand, •भिस्यतिज्वारयन् second hand

5 The mantra occurs in VārGṛ I. 12. In Mān I 2 3 24 the reading is corrupt.

6 So also Mān ib

7 The mantra is to be construed with दक्षिणत आज्यं निर्वपति of sūtra 23

8 The ms second hand पर्यग्नि.

9 ? The original was perhaps अवसज्य.

10 =असंस्पन्दयन् of Āp I. 25. 15.

11 The word occurs here for the first time The sense is clear.

12 The ms second hand omits [सा]वित्रेण.

13 MS I. 1. 10

14 The ms दर्भेन् first hand, दर्भान् second hand

इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् ।
मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषेषु ॥

**इति तस्य पाणिकोष्ठे निवपति** ॥ ३७ ॥ यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म **इत्यभिचरन्** ॥ ३८ ॥ मा वः शिवा ओषधयः **इति द्वितीयम्** ॥ ३९ ॥ द्रप्सस्त **इति तृतीयम्** ॥ ४० ॥ **एतेन धर्मेण त्रियजुषा हरति तूष्णीं चतुर्थम्** ॥ ४१ ॥ अपवाढं रक्षो ऽपवाढो ऽघशंसो ऽपबाढा यातुधाना **इति स्फ्येनोत्करमपिधत्ते** ॥ ४२ ॥ **अग्रेण गार्हपत्यमपरेणाहवनीयँ स्फ्येन वेदिं परिगृह्णाति यजमानमात्रां प्राचीँ यथा हवीँष्यासन्नानि संभवेयुस्तावतीं तिरश्चीम्**[2] ॥ ४३ ॥ सत्यसदसीति **पश्चार्धा-दुदीचीं लेखां लिखति**[3] । ऋतसदसीति **दक्षिणार्धात्प्राचीम्** । धर्मसदसीत्युत्तरार्धा-त्प्राचीम् ॥ ४४ ॥ **खेयां प्रतिष्ठाकामस्य कुर्यात्** ॥ ४५ ॥ अपारुमिति **द्व्यङ्गुलं**[4] **खात्वा स्फ्येन मूलान्युद्धत्योत्करे निवपति** ॥ ४६ ॥ **आहार्यपुरीषां पशुका-मस्य कुर्यात्** ॥ ४७ ॥

इतीष्टिसूत्रे [तृतीये ऽध्याये] प्रथम खण्डम् ॥

इमां नरः कृणुत वेदिमेत्य देवेभ्यो जुष्टामदित्या उपस्थे ।
ताँ[5] विश्वे देवा [अ]जुषन्त सर्वे[6] रायस्पोषा यजमानँ सँविशन्तु ॥

**इति संमृष्टामाहवनीयलक्ष्म्यं**[7] **प्राञ्चावँसावुन्नयति प्रतीची श्रोणी प्रागु-दक्प्रवणाँ**[8] **संनतमध्यामंतिकजघनाम्**[9] ॥ १ ॥ **एतदन्तं**[11] **पूर्वेद्युः करोति** ॥ २ ॥ **पाणी प्रक्षाल्य स्फ्यं प्रक्षालयत्यप्रतिमृशन्नग्रम्** ॥ ३ ॥ **वेदिमवोक्ष्य** प्रज्ञन्नुत्तरं[13] [ परिग्राहं ] परिग्रहीष्यामीत्यामन्त्र्य **परिगृह्णाति**—वसवस्त्वेति **पश्चाद्** रुद्रास्त्वेति **दक्षिणत** आदित्यास्त्वेत्युत्तरतः ॥ ४ ॥ धा असि स्वधा असि ॥ उर्वी चासि वस्वी चासि रन्ती चासि ॥ पुरा क्रूरस्येति **च स्फ्येन वेदिँ**[14] **संमृज्यापरेस्मिन्वेदितृतीये तिर्यञ्चँ स्फ्यँ स्तब्ध्वा**[15] प्रोक्षणीरासादयेध्मं**[16]**बर्हिरुपसादय स्रुवं [च] स्रुचश्च संमृड्ढि पत्नीँ संनह्याज्येनोदे-

1 MS I. 1. 10.
2 The ms तावतीतिरश्ची..
3 ! The ms second hand लेखाम्.
4 The ms द्वयङ्गुलान्.
5 The ms second hand इमां.
6 Cp KS I. 9, Mān I. 2 4 10 इमां देवा अजुषन्त विश्वे.
7 ! The ms second hand संसृष्टावा०.
8 ! The ms first hand यद्धम्येन.
9 The ms ०प्रवणो.
10 The ms ०मध्याव०.
11 ! The last three adjectives are floating in the air. These along with the next sutra are inserted by second hand.
12 The ms ०न्तां.
13 The ms ०त्तरान्.
14 The ms० मृज्य पर०.
15 The ms स्तीर्वा.
16 The ms इध्मं य०.

हीति संप्रेष्यति ॥ ५ ॥ आग्नीध्रो यथाप्रेषितं करोति ॥ ६ ॥ प्रोक्षणीरभ्युत्पूर्य स्फ्याग्रे ऽप उपनिनीयोदञ्चं स्फ्यमवकृष्य स्फ्यस्य वर्त्मन्सादयति ॥ ७ ॥ पुरोसदनात्स्फ्यमुद्यच्छेत् ॥ ८ ॥ स्फ्येनोत्करमवहन्ति—द्विषतो वधो ऽसीति पुरस्तात्प्रत्यञ्चम् ॥ ९ ॥ अभ्युद्य प्रत्यासादयति ॥ १० ॥ उत्तरतं आहवनीयस्य दक्षिणमिध्ममुत्तरं बर्हिः[5] ॥ ११ ॥ वेदप्रस्वैः[6] स्रुचः संमार्ष्टि चतुर्धा विभज्याविभज्य वा ॥ १२ ॥ आहवनीये गार्हपत्ये वा प्रत्युष्टं रक्षं इति[7] प्रतितप्याग्रे सपार्श्वाग्रै[9]-र्मुखानि मूलैर्दण्डान् ॥ १३ ॥ आयुः प्राणमिति सर्वतः स्रुवमभ्येद्‍ध्वा तेजिष्ठस्य तेजसा निष्टपामीति संमार्गं निष्टपति ॥ १४ ॥ चक्षुः श्रोत्रमिति जुहूमभ्यन्तरं प्राचीं प्रतीचीं बाह्यतः ॥ १५ ॥ वाचं पशूनित्युपभृतमभ्यन्तरं प्रतीचीं प्राचीं बाह्यतः ॥ १६ ॥ यज्ञं प्रजामिति[10] सर्वतो ध्रुवाम् ॥ १७ ॥ अभ्युदय संमार्गानग्नावनुप्रहरति—

दिवः[11] शिल्पमवततं पृथिव्याः ककुभि[12] श्रितम् ।
तेना सहस्रकाण्डेन द्विषन्तं तापयामसि ॥
द्विषन्नस्तप्यतां बहु मा न आगात्ताप्योषधयः स्वाहा ॥

इति ॥ १८ ॥ अग्ने गृहपत उप मा ह्वयस्व देवानां पत्नीरुप मा ह्वयध्वमिति पत्नी गार्हपत्यमुपतिष्ठते । पत्नीलोकं च—पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीरिति[13] ॥ १९ ॥

सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम ।
अग्ने सपत्नदम्भनं सुवीरासो अदाभ्यम् ॥

इति दक्षिणतः पश्चाद्गार्हपत्यस्योपविशति प्रभुज्य जानुनी ॥ २० ॥ योक्त्रेण पत्नीं संनह्यते[14] ऽन्तर्वस्त्रम्[15]—

आशासाना सौमनसं प्रजां सौभाग्यं तनूम् ।
अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम् ॥

1 Hir I. 22 अपकृष्य.
2 The ms पुनरा॰.
3 The ms ॰मप॰.
4 The ms उत्तरम्.
5 The verb उपसादयति to be supplied.
6 The ms second hand ॰प्रवरैः. प्रस्व occurs as a variant of प्रलव in Mān I. 2. 5. 2. वेदप्रस्व means the same as वेदप्रान्त or वेदाग्र.
7 MS I. 1. 11.
8 The ms adds आहवनीये.
9 The ms प्रतितप्याम्यसुप्रार्श्वाग्रै॰ first hand, प्रतितप्याम्यग्रे सुपार्श्वाग्रै॰ sec h.
10 The ms प्रजापति॰. See MS ib.
11 The ms first hand दिवि, which is also the reading of Mān I. 2. 5. 8.
12 ककुभिः of TB III. 3. 2. 1 and Mān ib is to be corrected.
13 MS I. 4. 3: 51. 7.
14 The ms second hand पत्नी संनह्यति.
15 The ms first hand ॰तर्वस्त्रम् which is struck off by the second hand.

इति ॥ २१ ॥ पूषा ते ग्रन्थिं ग्रथ्नात्विति[1] ग्रन्थिं करोति ॥ २२ ॥ स ते मा स्थादिति[1] दक्षिणतो ग्रन्थिमभ्यूहति ॥ २३ ॥ अपः स्पृष्ट्वा वेदेनाज्यमुपहरति ॥ २४ ॥ तदन्वारभ्याभिसंमील्यावेक्षते—अदब्धेन त्वा चक्षुषावेक्षे रायस्पोषाय सुप्रजास्त्वायै ॥ अदितिरिव सुपुत्रेन्द्राणीवाविधवा सुप्रजा[2] प्रजया भूयासमिति ॥ २५ ॥ इदं विष्णुरिति[4] गार्हपत्यदक्षिणाग्न्योरधिश्रयति ॥२६॥ तेजो ऽसीति[3] द्वितीयं पश्चाद्गार्हपत्यस्य ॥ २७ ॥ तेजो ऽनुप्रच्यवस्वेति हरति ॥ २८ ॥ अमेष्टे हरो मा विनैदित्याहवनीये ऽधिश्रित्योत्तरतः प्रोक्षणीनां स्फ्यस्य वर्त्मन्सादयति ॥ २९ ॥ तेजो ऽसीति[3] पर्यायैस्त्रिराज्यमुत्पूयाप उत्पुनाति पच्छो गायत्र्या ॥ ३० ॥ अमृतमसीत्याज्यमवेक्षते ॥ ३१ ॥ अन्तर्वेद्याज्यानि स्रुवेण गृह्णाति वेदमन्तर्धाय पवित्रे अवधाय धामासीति गृह्णंश्चतुर्जुह्वां गृह्णाति । अष्टौ गृह्णन्नुपभृति कनीयश्चतुर्ध्रुवायाम् ॥ ३२ ॥ भूयिष्ठं पञ्चमं पशुकामस्य ॥३३॥

इतीष्टिसूत्रे [तृतीये ऽध्याये] द्वितीयं खण्डम् ॥

आपो रेभत पिप्रृत मध्वा समक्ता निषाद स्था यामन्वाहार्यमाणा इति प्रोक्षणीरभिमन्त्रयते । देवीराप शुद्धा यूयमिति[3] च ॥ १ ॥ ब्रह्मन्निध्मं वेदिं बर्हिः प्रोक्षिष्यामीत्यामन्त्र्य विस्रस्येध्ममृते परिधिभ्यः प्रोक्षति ॥ २ ॥ कृष्णो ऽस्याखरेष्ठ इतीध्मं वेदिरसीति[3] वेदिं बर्हिरसीति[3] बर्हिस्त्रिस्त्रिः प्रोक्षति ॥ ३ ॥ देवगममसीत्यन्तर्वेद्यासाद्य बर्हिस्त्रिः प्रोक्षति—दिवे त्वेत्यग्रमन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम् ॥ ४ ॥ अग्राण्युपपाय्य ग्रन्थिं परिषिच्य मूलान्युपसिञ्चति ॥ ५ ॥ ऊर्ग्भव बर्हिषद्भ्य ॥ स्वाहा पितृभ्यो घर्मपावभ्यं इति दक्षिणतो वेद्याः प्रोक्षणीशेषं निनीय पूषा ते ग्रन्थिं विष्य त्विति[7] ग्रन्थिं विस्रस्य यजमाने प्राणापानौ दधामीति प्रस्तरे पवित्रे विसृज्य विष्णोः स्तूपो ऽसीति[8] प्रस्तरं सहपवित्रमाहवनीयतो ऽभिगृह्णात्यविधून्वन्नसंमार्गम् ॥ ६ ॥ अग्रेणाहवनीयं परिहृत्य दक्षिणतो ब्रह्मणे यजमानाय वा प्रयच्छति—प्राणापानाभ्यां त्वा सततुं कृणोमीति ॥ ७ ॥ मयि प्राणापानाविति प्रतिगृह्णाति ॥ ८ ॥ दर्भा

1 MS I 1 2

2 The ms ॰मप॰ first hand, ॰मा॰ second hand

3 MS I 1, 11

4 MS I 2 9

5 The ms first hand वर्त्मनि Cp Ap II 6 5.

6 The verse is corrupt Hir I, 25 165 has preserved the verse more carefully आपो रेफत पिप्रीत मध्वा समङ्क्तानिषद स्था यामन्नहृणीयमाना

7 MS I 1 12

8 The ms स्तू॰.

9 ? The ms ॰विधूनुयन्नसंमा॰ first hand, ॰विधूनयन्समा॰ second hand, Cp MS IV 1 13 17 15 न विधूनुयात्

नन्तर्धाय दक्षिणतः शुल्वँ स्तृणात्युत्तरमँसमभि[1] स्तृणन्बर्हिःस्तरणमन्त्रेण ॥ ९ ॥ पश्चार्धादुदगग्रमपत्नीकस्य निदध्यात् ॥ १० ॥ उरु प्रथस्वेति[2] स्तरणम् ॥ ११ ॥ पूर्वं पूर्वं धातुमपरमपरँ वा स्तृणाति ॥ १२ ॥ छादयन्मूलानि[3] प्राचीनमन्तर्दधाति वेदिम्[4] ॥ १३ ॥ प्रस्तरहस्तः परिधिभिराहवनीयं परिदधाति—गन्धर्वो ऽसीति[5] पश्चार्ध्यमुदञ्चमिन्द्रस्य बाहुरसीति[5] दक्षिणार्ध्यं[6] प्राञ्चं मित्रावरुणौ त्वेत्युत्तरार्ध्यं[6] प्राञ्चम् ॥ १४ ॥ अवंकृष्याग्रतरमिध्मादूर्ध्वे समिधावादधाति—नित्यहोतारं त्वेति[5] । तूष्णीमुत्तराम् ॥ १५ ॥ सूर्यस्त्वा रश्मिभिरित्याहवनीयमुपस्थाय पुरस्तादप्रच्छिन्नप्रान्तौ दर्भावनन्तर्गर्भावुदगग्रौ बर्हिषि वितनोति—विश्वजनस्य विधृती स्थ इति[8] ॥१६॥ विधृत्योः प्रस्तरँ सादयति दक्षिणार्धे बर्हिषः—वसूनाँ रुद्राणामिति[5] ॥ १७ ॥ द्यौरसीति[5] प्रस्तरे जुह्वम् ॥ १८ ॥ समं प्रस्तरमूलैर्दण्डं करोति ॥ १९ ॥ अन्तरिक्षमसी[5]-त्युत्तरामुपभृतमधस्ताद्विधृत्योः । पृथिव्यसीत्युत्तरां ध्रुवामुपरिष्टाद्विधृत्योः ॥ २० ॥ असँस्पृष्टाः सादयत्यनूचीः ॥ २१ ॥ ऋषभो ऽसीति[5] दक्षिणतो जुह्वाः पूर्णस्रुवँ सादयति ॥ २२ ॥ ध्रुवा असदन्नित्याज्यानि संमृशति ॥ २३ ॥ स्योनं ते सदनं कृणोमि[9] घृतस्य धारया सुशेवं कल्पयामीति पात्र्यामुपस्तीर्याभिघार्य हवीँष्युद्वासयति—आर्द्रः पृथस्नुर्भुवनस्य गोपा शृतं उत्स्नातु जनिता मतीनाम् [इति] ॥ २४ ॥ सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये त्वा जुष्टमभिघारयामीत्याग्नेयमभिघारयति यथादेवतमुत्तरम् ॥ २५ ॥ अनभिघ्नन्नपर्यावर्तयन्वेदेन प्रमृज्य पात्र्यामवदधाति ॥ २६ ॥ इरा भूति पृथिव्यां[12] रसो मोत्क्रमीदिति[13] कपालान्यभिघार्य पुरोडाशावलंकरोति ॥ २७ ॥ तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन । तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मेन्द्रियेण वीर्येण । तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिः ॥ स्वमङ्क्ष्व त्वचमङ्क्ष्व सर्वमात्मानमङ्क्ष्वेति स्वक्तमनीकाशमेनाक्ति ॥ २८ ॥ अधस्तादुपाज्य दोहावलंकरोति—

यस्त आत्मा पशुषु प्रविष्टो देवानाँ विष्ठामनु यो वितष्टे[16] ।

1 The ms स्तृणामुत्तरमसमभि first hand, स्तृणात्यूर्णामदसमभि second hand.

2 MS I 1, 9 5, 5.

3 अग्रै to be supplied—अग्रैर्मूलानि छादयन्

4 "He covers the vedi (with the grass) from west to east" ?

5 MS I. 1, 12.

6 In all the three instances the ms reads °rdh° for °rdhy°. Cp Hir I. 23 171

7 Perhaps to be emended to अप०.

8 The ms विधृता स्थेति.

9 The ms कृणोमीति.

10 The ms श्रित.

11 त्वा is struck off by second hand, but cp Mān I. 2 6 18.

12 The ms second hand पृथिव्यै

13 The ms first hand रसेनोत्क्रमदिति.

14 Thus the ms. All the Mān mss अनिकाषं Āp II. 11. 3 अणिकाषं.

15 The ms second hand विष्ठा०.

16 The ms विवस्मे first hand, विवस्थे second hand

आत्मन्वान्सोम घृतवानिहेहि[1] स्वर्विन्द यजमानाय मह्यम् ॥

इति ॥ २६ ॥ पश्चात्स्रुचां प्रत्यग्दण्डां पात्रीमासादयत्यग्रेण स्रुचः कुम्भ्यौ संधाय दक्षिणस्यां वेदिश्रोण्यां शृतमुत्तरस्यां दध्यग्रेण स्रुचो वेदं सादयति ॥ ३० ॥ वेद्यन्तान्परिस्तीर्य होतृषदनमास्तीर्याग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति ॥ ३१ ॥

इतीष्टिसूत्रे [ तृतीये ऽध्याये ] तृतीयं खण्डम् ॥

प्रणवे प्रणवे समिधमादधात्यनुयाजसमिधमवशिष्य ॥ १ ॥ समिद्धमग्निं निर्वेदेनोपवाजयत्यग्ने वेधाः संमार्गम् ॥ २ ॥ ध्रुवायां पूर्णस्रुवमवनीय ध्रुवाया उपहत्योत्तरेण परिधिसंधिनान्ववहृत्य दक्षिणाप्राञ्चमाघारमाघारयति—प्रजापतये स्वाहेति मनसा ॥ ३ ॥ अग्नीत्परिधींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति ॥ ४ ॥ स्फ्येन संमार्ष्टीध्मसंनहनैश्च परिधीन् । ऋते स्फ्यादग्निमिध्मसंनहनैः संमार्ष्टि—आजिं त्वाग्ने सरिष्यन्तं सनिं सनिष्यन्तं वाजं जेष्यन्तं देवेभ्यो हव्यं वक्ष्यन्तं वाजिनं त्वा वाजजित्यायै संमार्ज्मि ॥ अग्ने वाजं जयेति ॥ ५ ॥ सप्रथा नम इति पुरस्ताज्जुहूपभृतोरञ्जलिं करोति ॥ ६ ॥ जुह्वेह्यग्निष्ट्वा ह्वयति देवान्यक्ष्यावो देवयज्यायै [ इति जुहूमादत्ते । उपभृदेहि देवस्त्वा सविता ह्वयति देवान्यक्ष्यावो देवयज्यायै ] इत्युपभृतम् ॥ ७ ॥ सुयमे मे अद्य स्तमित्यभिमन्त्र्यामाविष्ठ इत्यतिक्रामति ॥ ८ ॥ विष्णोः स्थामासीत्यवतिष्ठते ॥ ९ ॥ अन्तर्वेदि दक्षिणः पादो भवत्यवघ्न इव सव्यः ॥ १० ॥ अथाघारमाघारयति—ऊर्ध्वो अध्वर इति प्रागुदञ्चं संततमूर्ध्वं स्वर्गकामस्य न्यञ्चं द्वेष्यस्य ॥ १२ ॥ असंस्पर्शयन्स्रुचौ प्रत्यतिक्रामति—पाहि माग्ने दुश्चरितादा मा सुचरिते भजेति ॥ १३ ॥ जुह्वा ध्रुवां त्रिः समनक्ति—

समक्तमग्निना हविः समक्तं हविषा घृतम् ।
समन्तरिक्षमर्चिषा सं ज्योतिषा ज्योतिः ॥

1 For इहेहि the ms येहि first hand, हि (= Āp II. 10. 5) second hand.

2 The ms संमार्गं.

3 The ms अप०.

4 The ms second hand adds ध्यायन्.

5 MS IV. 1. 14: 19. 3-4.

6 MS I. 1. 13.

7 The ms second hand सुयमे मे च घृताची भूयास्तमित्यभि०.

8 The ms दक्षिणमादो भवत्यवघ्न इव सयो घाघारम् first hand, दक्षिणं पादमवघ्नन्सव्यं कृत्वाघारम् second hand.

9 This is derived from MS I. 4. 12 61. 6-7.

10 This very faulty reading is in Mān I. 3. 1. 18.

11 This line is MS IV. 1. 14: 19. 15. The ms second hand has a dif-

इति ॥ १४ ॥ ध्रुवामभिघार्यायतने स्रुचौ सादयति ॥ १५ ॥ उक्षीतँ राय इति ध्रुवाया आज्यमुन्नयति । सुवीराय स्वाहेति जुहूमाप्याययति ॥ १६ ॥ यज्ञेन यज्ञः संतत इति जुह्वा ध्रुवां प्रत्यभिघारयति ॥ १७ ॥ उत्तरतः प्रवरायावतिष्ठते । स्फ्यसंमार्गौ[1] पाणौ कृत्वापर आग्नीध्रो[2] वेद्यास्तृणमभ्यन्तमपादायाह—क इदमध्वर्युर्भविष्यति[4] स इदमध्वर्युर्भविष्यति[5] ॥ यज्ञो यज्ञस्य ॥ विष्णोः स्थाने तिष्ठामि ॥ वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु ॥ वाचं प्रपद्ये ॥ भूर्भुवः स्वः ॥ ब्रह्मन्प्रवरायाश्रावयिष्यामीत्यामन्त्र्याश्राव्य प्रत्याश्रुत आह—अग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति ॥ १८ ॥ ऊर्ध्वानृषीन्मन्त्रकृतो यजमानस्य प्रवृणीते ॥ १९ ॥ पुरोहितप्रवरेणाब्राह्मणस्य ॥ २० ॥ ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार इति ॥ २१ ॥ होतुरुपाँशु नामादिशति मानुष इत्युच्चैः ॥ २२ ॥ घृतवतीति[7] संप्रेष्यति ॥ २३ ॥ स्रुचावादाय[8] समिधो यजेति प्रथमे[9] संप्रेष्यति यज यजेत्युत्तरान् ॥ २४ ॥ श्रीनिष्ट्वोपभृतोऽर्धं जुह्वामानीयोत्तरौ यजति ॥ २५ ॥ पञ्च प्रयाजानुत्तरेणाधारसंभेदँ समानत्र यजति[10] ॥ २६ ॥ ध्रुवादीनि[11] हवीँष्यभिघारयत्युपभृतमन्ततः ॥ २७ ॥ ज्योतिष्मत्याज्यभागौ यजत्याग्नेयमुत्तरार्धे सौम्यं दक्षिणार्धे[12] ऽग्रेणाधारसंभेदमतिक्रामेत्[14] ॥ २८ ॥ प्रधानाहुतीः पूर्वां पूर्वां सँहिताम् ॥ २९ ॥ आग्नेयेन प्रचर्योपाँशुयाजेन प्रचरति ॥ ३० ॥ उपाँशु देवतामाहोच्चैरन्यत् ॥ ३१ ॥ सांनाय्येन समानदेवतस्य दोहयोश्च समवदाय प्रचरति ॥ ३२ ॥ पुरस्तात्स्विष्टकृतः स्रुवेण पार्वणौ होमौ जुहोति—

ऋषभं वाजिनं वयं पूर्णमासँ हवामहे ।

स नो दोहतां सुवीर्यं रायस्पोषँ सहस्रिणम् ॥

पूर्णमासाय सुराधसे स्वाहेति पौर्णमास्याम् ॥ ३३ ॥ अमावास्या सुभगा सुशेवा

ferent reading, which is common with Hir. समक्रमग्निनाघृतं· समक्तं हविषा हविः.

1 1The ms स्फ्यं संमार्गं.

2 The ms adds पश्चार्धे होता.

3 The ms •मभ्याह•. But cp Āp II 15 1.

4 The ms •मवदायाह.

5 The ms second hand इदममीद्भविष्यति.

6 The ms adds ध्रुवंन्

7 The meaning is: The Hotṛ pronounces his sampraiṣa in which the word घृतवती is contained.

8 The ms स्रुचावसाद्य.

9 We expect प्रथमं. प्रथमे recurs at the end of khaṇḍa 5.

10 Cp MS I. 4 12· 61. 14-15.

11 The ms •दीनि.

12 Cp MS ib 62. 2.

13 Ib 61. 15-16.

14 The ms •कामी.

धेनुरिव पयो भूयं आप्यायमाना ।
सा नो दोहताँ सुवीरँ रायस्पोषँ सहस्रिणम् ।
अमावास्यायै सुराधसे स्वाहा ॥

इत्यमावास्यायाम् ॥ ३४ ॥ उत्तरार्धपूर्वार्धे ऽग्निं स्विष्टकृतम[सँ]सृजन्य जति ॥ ३५ ॥ आयतने स्रुचौ सादयति ॥ ३६ ॥

इतीष्टिसूत्रे [ तृतीये ऽध्याये ] चतुर्थ खण्डम् ॥

आग्नेयमध्यादधिहस्त्योङ्गुष्ठेनोपमध्यमया च यवमात्रं प्राशित्रमवद्यति ॥ १ ॥ अनुपस्तृणन्नभिघार्याग्रेणोत्तरं वेदसमप उपनिनीयं व्यूह्यौषधीः सादयति ॥ २ ॥ सर्वेषाँ हविषां द्विर्द्विरिडों समवदाय सादयति ॥ ३ ॥ आग्नेयस्य दक्षिणार्धादवदाय पूर्वार्धादणुं दीर्घं यजमानभागमवद्यति ॥ ४ ॥ मध्यात्संभिन्द न्द्वितीयामिडाम् ॥ ५ ॥ अग्रेण हवीँषि पश्चार्धेन स्रुचः परिहृत्य प्रत्यङ्मुख आसीनो होत्र इडां प्रयच्छति ॥ ६ ॥ अग्रेण होतारमपरेणेडां दक्षिणातिक्रम्या नतिक्रम्य वा होतुरङ्गुलिपर्वणी अनक्त्यपरं पूर्वम् ॥ ७ ॥ इडाया होत्रे ऽवान्त रेडाँ हस्ते ऽवद्यति होता पूर्वमध्वर्युरुत्तरम् ॥ ८ ॥ अध्वर्युराग्नीध्रो ब्रह्मयज मानावित्यन्वारभन्ते ॥ ९ ॥ उपहूतायामिडायां दक्षिणत परीतोत्तरत परीतेति संप्रेष्यति ॥ १० ॥ यजमानपञ्चमा ऋत्विजो व्यतिक्रम्य भक्षयित्वेडां प्रस्तरे मार्जयन्ते—

मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नँ यज्ञँ समिमं दधातु ।
बृहस्पतिस्तनुतामिमं नो यज्ञँ विश्वे देवा इह मादयन्ताम् ॥

इति ॥ ११ ॥ व्युद्दिष्टस्य द्वैधमाग्नीध्रभागं पृथक्पाण्योरवद्यति—उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ उपहूतो द्यौ पितोप मां द्यौ पिता ह्वयतामग्निराग्नीध्रात्स्वाहेत्युपहूय पृथिव्यास्त्वा दात्रा प्राश्नाम्यन्तरिक्षस्य त्वा दात्रा प्राश्नामि दिवस्त्वा दात्रा प्राश्नामि दिशां त्वा दात्रा प्राश्नामीति प्राश्नाति ॥ १२ ॥ वेदेन ब्रह्मभाग यजमानभागावग्रेणाहवनीयं परिहृत्य दक्षिणत. प्राशित्रहरणे ऽन्तर्वेदि ब्रह्मभागं सादयत्यपरं बहिर्वेदि यजमानभागम् ॥ १३ ॥ अन्वाहार्यमनु हवीँष्युद्वासयति

1 The ms second hand strikes off पयो भूय.

2 Cp MS I, 4, 13 63, 11–12

3 The ms अमेयं म॰

4 1 Perhaps to be corrected to ॰दवि हृत्या॰

5 The same as Mān I 3 3, 1 अवो-क्षिते

6 6 1 Thus tentatively emended, The ms सर्वेषा युदयति first hand, सर्वेषा॰ सुपोहति second hand

7 The ms ॰मिडायाम्

8 This line is MS I 7 1 109 4

9 The ms first hand मा

॥ १४ ॥ अनुयाजसमिधमादायाह—ब्रह्मन्प्रस्थास्यामः समिधमाधायामीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति ॥ १५ ॥ इध्मसंनहनैः संमार्ष्टि—आजिं त्वाग्ने सरिष्यन्तं सनिं सनिष्यन्तं वाजं जिगिवांसं देवेभ्यो हव्यमूहिवांसं वाजिनं त्वा वाजजितं संमार्ज्म्यग्ने वाजमजैषीरिति ॥ १६ ॥ विस्रस्याभ्युद्य संमार्गानग्नावनुप्रहरति—

यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा ।
पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा ॥

इति ॥ १७ ॥ औपभृतं जुह्वामानीय त्रीननुयाजान्यजति—देवान्यजेति प्रथमे[2] यज यजेत्युत्तरौ ॥ १८ ॥ समिध्यपरमपरमिध्द्वोत्तमेनेतरावनुसंभिद्यायतने स्रुचौ सादयति ॥ १९ ॥

इतीष्टिसूत्रे [ तृतीये ऽध्याये ] पञ्चमं खण्डम् ॥

वाजस्य मेति[3] जुहूं सहप्रस्तरामुद्गृह्णाति । अथा सपत्नानिन्द्रो मे इत्युपभृतमवगृह्णाति । उद्ग्राभमथेति[3] जुहूम् । निग्राभमथेत्युपभृतम् । अथा सपत्नानिन्द्राग्नी मे इति विषूची करोति ॥ १ ॥ अग्नेरुज्जितिमनूज्जेषमिति प्राचीं जुहूं प्रकर्षति ॥ २ ॥ देवस्त्वा सविता प्रतिनुदतु यो अस्मान्द्वेष्टि यं च वयं द्विष्म इत्युपभृतं प्रतीचीं बहिर्वेदि निरस्यति ॥ ३ ॥ अभ्युद्य प्रत्यासादयति ॥ ४ ॥ जुह्वा परिधीननक्ति—वसुरसीति[3] मध्यममुपावसुरिति[3] दक्षिणं विश्वावसुरित्युत्तरम् ॥ ५ ॥ प्रजानाथां द्यावापृथिवी इति बर्हिषि विधृती विसृज्य प्रस्तरमनक्ति—पृथिव्यामङ्ध्वेति ध्रुवायां मूलमन्तरिक्षे ऽङ्ध्वेत्युपभृति मध्यं दिव्यङ्ध्वेति जुह्वामग्रम् ॥ ६ ॥ प्रत्यवरोहैः[4] पुनरक्त्वायुषे त्वेति[5] प्रस्तरात्तृणमपादाय मूलैः प्रतिष्ठाप्य प्रस्तरमासीन आश्राव्य प्रत्याश्रुत आह—इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति संप्रेष्यति ॥ ७ ॥ अस्यामृधेद्धोत्रायामित्युच्यमाने सहशाखं[7] प्रस्तरमग्नावनुप्रहरति ॥ ८ ॥ अप्तुमी रिहाणौ इति नियतं[8] प्राश्ममनुप्रहृत्यैनान्यवसृजति[9] ॥ ९ ॥ अग्नीद्गमयेति संप्रेष्यति ॥ १० ॥ आग्नीध्रस्त्रिः पाणिना गमयति ॥ ११ ॥ अनुप्रहर सैवदस्वेत्याग्नीध्रः संप्रेष्यति ॥ १२ ॥

1 The ms हव्यसु॰, as against Mān mss (IV. 13. 9. 212. 9) reading is as adopted above.

2 We expect प्रथमं. See I. 3. 4. 24.

3 MS I. 1. 13

4 "With the same mantras but now in reversed order."

5 MS II. 8. 3. 108. 19.

6 The ms ॰वृधे होत्रायाम्. The Saṃhitā

7 The ms second hand सह शाखया. But our text has a predilection for compounds beginning with सह.

8 ? Perhaps to be emended to न्यग्नं.

9 ? The ms ॰त्येनान्यवसृजति first hand, ॰त्यैवान्य॰ second hand.

महीनः प्राण इत्युपांशु तृणमनुप्रहरति ॥ १३ ॥ एतदिति त्रिरङ्गुल्यानुदिशति ॥ १४ ॥ आयुर्धा अग्ने ऽसीति[1] यथारूपं गात्राणि संमृशति ॥ १५ ॥ ध्रुवासीति[2] पृथिवीमभिमृश्यार्चि[3]रालभ्य चक्षुषी आलभेत—

पुनर्यमश्चक्षुरदात्पुनरग्निः पुनर्भगः ।

पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः ॥

इति ॥ १६ ॥ अपः स्पृष्ट्वा मध्यमं परिधिमन्वारभ्याह—अगा३नग्नीदिति । अगन्नित्याग्नीध्रः । श्रावयेत्यध्वर्युः । श्रौषडित्याग्नीध्रः प्रत्याश्रावयति ॥ १७ ॥ स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति संप्रेष्यति ॥ १८ ॥

यं पारधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः ।

तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयातै ॥

इति परिधीननुप्रहरति ॥ १९ ॥ उपकर्षत्युत्तरार्ध्यम्[4] ॥ २० ॥ जुह्वामुपभृतमाधार्य[5] संस्रावभागाः स्थेति[6] परिधीनभिहुत्य[7] स्रुचौ विमुञ्चति ॥ २१ ॥ अग्नेर्वो ऽपन्नगृहस्य सदसि सादयामीति[8] हविर्धानं च[9] कस्तम्भदेशे स्रुचौ सादयति ॥ २२ ॥ घृताची यजमानस्य धुर्यौ पातमिति धुरोपकर्षति[10] वेदसयोर्वा ॥ २३ ॥ न विमुक्ते[11] बर्हिषि प्रत्यासादयति ॥ २४ ॥

इतीष्टिसूत्रे [तृतीये ऽध्याये] षष्ठं खण्डम् ॥

जुहूं वेदोपयाममध्वर्युरादाय प्रत्यक्क्रामति सहस्रुवामाज्यस्थालीं होता स्फ्यमाग्नीध्रः ॥ १ ॥ गार्हपत्ये पत्नीः संयाजयन्त्यपरो[12] होता दक्षिणो ऽध्वर्युरुत्तर आग्नीध्रः पश्चार्धे होतुः[13] पत्नी ॥ २ ॥ आसीना ध्वनः सना

1 MS I. 5. 2 67. 16.

2 MS II 7. 6 80 14.

3 The meaning of अर्चि here is unknown. The uniformity of the Vāraha tradition is shown by its occurrence in the Gṛhya (V. 37)

4 The ms ०र्ध्यम्

5 The ms ०दाय

6 MS I. 1 13. 9 3.

7 The ms परिधीनुपहृत्य. The emendation is suggested by Man I 3 4. 27.

8 MS I. 3. 1 29. 1.

9 Prof Caland suggests हविर्धानस्य for हविर्धानं च.

10 ? Perhaps the original was धुरो प्रकर्षति. Cp Ap III 8 4 युगधुरो प्रोहति

11 The ms नावमुक्ते

12 The ms second hand ०परेण.

13 ? The ms होता.

भवति[1] ॥ ३ ॥ उत्तरार्धे सोमं यजति दक्षिणार्धे त्वष्टारम् ॥ ४ ॥ परिश्रिते देवानां पत्नीं राकां सिनीवालीमिति यजति ॥ ५ ॥ पुरस्ताद्देवपत्नीनां पशुकामस्य सिनीवालीं[2] यजत्युपरिष्टाद्राकां वीरकामस्य ॥ ६ ॥ सं पत्नी पत्येति[3] पत्नीमन्वारभ्य स्रुवेण जुहोति—

आरभेथामनुसंरभेथां समान पन्थामपथा घृतस्य ।
यद्वां परिविष्टं यदग्नौ तस्य फल्पत्यै दम्पती अनुसंरभेथां स्वाहा ॥

इति ॥ ७ ॥ उत्तरार्धपूर्वार्धे ऽग्निं गृहपतिम् ॥ ८ ॥ चतुरिडामवद्यति पञ्चकृत्वो ऽग्नीधे[4] ॥ ९ ॥ प्रत्यवरोहेणाङ्गुलिपर्वणी अनक्ति प्रत्यवरोहेणाग्नीध्र उपह्वयते ॥ १० ॥ व्याख्यातं भक्षणम् ॥ ११ ॥ इध्मपरिवासनान्युपसमाधाय दक्षिणाग्नौ चतुर्गृहीत आज्ये फलीकरणान्यावापं जुहोति—अग्ने ऽदब्धायो ऽदब्धमनो पाहि मा दिव.[5] पाहि प्रसित्या.[6] पाहि दुरिष्ट्या पाहि दुरद्मन्या अविषं न पितुं कृधि सुषी[7] योनिं[8] सुषदां पृथिवीं[9] स्वाहेति[10] ॥ १२ ॥ इन्द्रोपानस्यकेहमनसो वेशान्कृधि सुमनस सजातान्स्वाहेति द्वितीयां ग्रामकामस्य ॥ १३ ॥

उलूखले मुसले यत्कपाल उपलायां दृषदि धारयिष्यति ।
अवंप्रुषो विप्रुष संयजामि विश्वे देवा हविरिदं जुषन्तां स्वाहा ॥

इति पिष्टलेपम् ॥ १४ ॥ या सरस्वती वेशयमनी[11] ॥ या सरस्वती वेशभगीनेत्यौ-ज्याहुती ॥ १५ ॥ होता पत्न्यै वेदं प्रयच्छति[12]—वेदो ऽसि वित्तिरसि विदेयं प्रजाम् ॥ कर्मासि करणमसि क्रियासं सुकृतम् ॥ सनिरसि सनितासि सनेयं पशूनिति त्रिः प्रतिमन्त्रमुपस्थ आस्यते[13] ॥ १६ ॥

इमं विष्यामि वरुणस्य ग्रन्थिं यत्रबध्नन्य सविता सत्यधर्मा ।
ऋतस्य योनौ सुकृतस्य लोके ऽरिष्टाहं[14] सह पत्या भूयासम् ॥

इति शुल्बं विस्रस्य[15] वेदमञ्जलिनाधस्ताद्योक्त्रमुपयच्छति ॥ १७ ॥ पूर्णपात्रे

1 Thus the ms first hand. The second hand, आसीना ध्यानेनोपांशु वा, which is from Ap III 8 8

2 MS I 4 3 51 4.

3 =पत्नीमन्वारम्भयिता ?

4 The ms मींध्रे first hand, मींध्रो second hand

5 The ms second hand माप दिव . Cp VS II. 20 मा दिवो .

6 The ms प्रयप्या first hand, प्रसित्यै second hand

7 Thus the ms first hand The second hand makes corrections after TS.

8 The ms second hand कुरु

9 The ms सु॰.

10 The ms स्रवे॰.

11 MS I. 4 3 51. 7-8.

12 Derived from MS I. 4 8 56 2

13 Derived from MS ib 4

14 Thus tentatively emended The ms रिष्टाद्वी.

15 The ms विसंस्य.

पत्नीं वाचयति यथा याजमानम् ॥ १८ ॥ समायुपेत्यन्ततः पूर्णपात्रस्य जपति ॥ १९ ॥ प्रायश्चित्तहुतीर्जुहोति[1]—इष्टेभ्यः स्वाहा । स्विष्टेभ्यः स्वाहा वषट् । अनिष्टेभ्यः स्वाहा भेषजम् । दुरिष्टेभ्यः स्वाहा । इष्ट्यै स्वाहा । स्विष्ट्यै स्वाहा । निष्कृत्यै स्वाहा । निष्कृत्यै दरिष्ट्यै स्वाहा । दुराद्र्ध्यै स्वाहा । दैवीभ्यस्तनूभ्यः स्वाहा । मानुषीभ्यः स्वाहा । अतिरिक्तं न्यूने जुहोमि स्वाहा । न्यूनमतिरिक्ते जुहोमि स्वाहा । समं समे जुहोमि स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवः स्वः स्वाहेति । त्वं नो अग्ने[2] ॥ स त्वं नो अग्ने[2] ॥ मनो ज्योतिः[3] ॥ त्रयस्त्रिंशत्तन्तवः ॥ अयाश्चाग्ने ऽसीति[4] च ।

अश्रावितमत्याश्रावितं वषट्कृतमवषट्कृतमननूक्तमत्यनूक्तं च यज्ञे ॥
अतिरिक्तं कर्मणो यच्च हीनमग्निष्टानि प्रयुजन्नेतु कल्पयन्स्वाहा ॥

इति ।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथुं[5] ।
सर्वं तदग्ने कल्पय त्वं हि वेत्थ यथायथं[6] स्वाहा ॥

इति ।

इष्टिश्च स्विष्टिश्च ये यज्ञमभिरक्षत ।
प्रजामन्या नः पातु यज्ञमन्याभिरक्षतु स्वाहा ॥

इति ।

यन्नो गृहं भयमागादबुद्धं यद्देवतः पितृतो यन्मनुष्यतः ।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः स्वाहा ॥

इति ॥ २० ॥ आज्यस्थाल्या ध्रुवामाप्याययति—

आप्यायतां ध्रुवा घृतेन यज्ञिया यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधो ऽदितेरुपस्थ उरुधारां[7] पृथिवी यज्ञे अस्मिन् ॥
..........................................[8]

[ इति तृतीयो ऽध्यायः ]

---

1 The ms ॰हुतिं जुहोति.
2 MS IV. 10. 4 153. 12-15.
3 MS I. 7. 1 109 1-6
4 MS I 4 3 51 10
5 The ms मिथ .
6 The ms यज्ञायज्ञियं
7 The ms ॰धारे.
8 Here is a lacuna in the ms

पौर्णमास्याममावास्यायाँ वा वसन्ते ब्राह्मण आदधीत। ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकारः ॥ १ ॥ सार्ववर्णिकँ शिशिरम् ॥ २ ॥ ऋतुनक्षत्रपर्वसंनिपात आदधीत ॥ ३ ॥ सर्वं[त्र] सोमेन यक्ष्यमाणः ॥ ४ ॥ केशश्मश्रु वापयित्वा क्षौमे आच्छाद्यौपवसमशनमश्नीतः ॥ ५ ॥ देवयजनस्य[1] श्रीनुदीचो वँशान्कृत्वाग्रेण मध्यमँ वँशमपराह्णे प्राचीनप्रवण औपासनमाधायाभिजुहोति—

प्र वेधसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे।
यतो भयमभयं तन्नो अस्त्वव देवानाँ यजे हेड्यानि स्वाहा ॥

इति[5] कूष्माण्डैश्च ॥ ६ ॥ तस्मिन्निशायां ब्रह्मौदनँ श्रपयत्यानडुहे चर्मण्यवहत्य चतुःशरावं चतुर्षूदपात्रेषु पयसि वा जीवतण्डुलम् ॥ ७ ॥ उद्धृत्याभ्याज्यं[6] कृत्वा तं चत्वार ऋत्विज आर्षेयाः सकृदवदाय प्राश्नन्ति ॥ ८ ॥ तेभ्यो वरं ददाति ॥ ९ ॥ शेषे तिस्रः समिधः प्रादेशमात्रीरुद्गृह्यादधाति चैत्यस्याश्वत्थस्य हरिणीः सहपलाशाः स्तिविगवतीः—प्र वो वाजा अभिद्यव इति गायत्रीभिर्ब्राह्मणस्य। आ त्वा जिघर्मि[8] ॥ आ विश्वतः[9] ॥ यस्ते अयेति[10] राजन्यस्य। सप्त ते अग्ने[11] ॥ जनस्य गोपाः ॥ उपह्वरन्ति सिन्धवे इति वैश्यस्य ॥ १० ॥ सँवत्सरं ब्रह्मौदनिकं भृत्वाग्निनादधीत। द्वादशरात्रं त्रिरात्रमेकरात्रँ वा ॥ ११ ॥ नानृतँ वदेन्न माँस-

1 We expect the locative. Perhaps some word (e g मध्ये) has fallen out.

2 Based on MS I 6, 13. 107, 19-20.

3 The ms वेदाय first hand, मेध्याय second hand.

4 The ms second hand हेड्यानिति.

5 Based on MS I, 6, 12. 104 9-10

6 The word is unknown from elsewhere. Probably it may mean आज्येनाभिघृतं.

7 The ms चैतस्या॰ first hand, चित्रियस्या॰ second hand. Cp Mān I, 5, 1, 24.

8 MS I. 6, 1. 84, 14

9 MS II. 7, 2. 76, 3-6.

10 MS II, 7 9 87. 1.

11 MS I. 6, 2. 88, 3.

12 MS II 13, 7: 156. 2.

13 MS IV 11, 2. 165. 5.

14 The ms म॰.

मश्नीयान्न स्त्रियमुपेयान्नास्य वासः पल्पूलनेन पल्पूलयेयुर्नास्याग्निं गृहाद्धरेयुर्नान्यत आहरेयुर्न प्रयायान्नानुगच्छेत् ॥ १२ ॥ यदि प्रयायादनु वा गच्छेदोदनं चतुःशरावं पक्त्वा समिधः पुनरादध्यात् ॥ १३ ॥ यस्तँ श्वो ऽग्निमाधास्यन् [स्यात्] प्रजा अग्ने इति निशायां कल्मापमजं बध्नाति[4] ॥ १४ ॥ अरणिपाणिर्यजमानो जागर्ति ॥ १५ ॥

शल्कैरग्निमिन्धान उभौ लोकौ सनोम्यहम् ।
उभयोर्लोकयोर्ऋध्द्वाति मृत्युं तराम्यहम् ॥

इति शल्कैरग्निमिन्धीत ॥ १६ ॥ उपव्युषमरणी निष्टपति ॥ १७ ॥ अयं ते योनिर्ऋत्विय इत्यरण्योरग्निँ समारोपयति ।

जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते ।
अग्निमश्वत्थादधि हव्यवाहँ शमीगर्भाज्जनयन्यो मयोभूः ॥

इति च ॥ १८ ॥

ऋत्वियवती स्थो अग्निरेतसौ रेतो धत्तं पुष्ट्यै प्रजननम् । तत्सत्यँ यद्वीरं बिभृतो वीरं जनयिष्यतस्ते[7] मत्प्रातः प्रजनयिष्येते[8] । ते मा प्रजाते प्रजनयिष्यतः प्रजया पशुभिर्ब्रह्मवर्चसेनेत्यरणी अभिमन्त्र्य यजमानाय प्रयच्छति ॥ १९ ॥

मही विश्पत्नी सदनी ऋतस्यार्वाची एतं धरुणे रयीणाम् ।
अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम् ॥

इति प्रतिगृह्णाति ॥ २० ॥ प्रतिगृह्य वाचँ यच्छति—अनृतात्सत्यमुपैमि मानुषाद्दैवं दैवीं[10] वाचँ यच्छामीति ॥ २१ ॥ अनुगमयन्त्यग्निमुद्धरन्ति भस्म ॥ २२ ॥ औद्धौदनिकलक्षणे गार्हपत्यमादधाति पुरस्तादाहवनीयमष्टसु प्रक्रमेषु ब्राह्मणस्यैकादशसु राजन्यस्य द्वादशसु वैश्यस्यापरिमिते वा ॥ २३ ॥ वितृतीयमात्रे दक्षिणाग्निं दक्षिणतः पुरस्ताद्गार्हपत्यस्य ॥ २४ ॥ आधानानुपूर्वेण संभारान्निवपत्यर्धानाहवनीयलक्षणे ऽर्धानितरयोः ॥ २५ ॥

इत्याधाने [ चतुर्थे ऽध्याये ] प्रथमं खण्डम् ॥

1 The same expression occurs in TS II. 5. 5 6.

2 नास्याग्निं...आहरेयु is derived from MS I. 6. 12. 105. 12.

3 Identical with KS VIII. 12 95. 18.

4 MS I. 6. 1: 85. 5.

5 Based on KS VIII 12 95. 16, 17.

6 MS I. 5. 1: 66. 4.

7 The ms second hand ०यस्ते, following TB I. 2. 1. 14.

8 The ms second hand ०ये, again after TB ib.

9 The ms second hand ०थ, after TB ib.

10 The ms म०.

उत्समुद्रान्मधुमं ऊर्मिरागात्साम्राज्याय प्रतरं दधान. ।
अमी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम ॥
इत्यौत्समुदकम् ॥ १ ॥
यत्पर्यपश्यत्सलिलस्य मध्य उर्व्या स्थानं जगत· प्रतिष्ठाम् ।
तत्पुष्करस्यायतनाद्विजातं पर्णं पृथिव्या· प्रथनं हरामि ॥
इति पुष्करपर्णं निधाय
इयत्यग्र आसीदितो देवी प्रथमाना पृथग्यदिति वराहविहतम् ॥ २ ॥ वल्मीकवपां न्युप्योपाग्निवप्स्यन्ध्यायति—यददश्चन्द्रमसि कृष्णं तदिहास्त्विति ॥ ३ ॥
यददो दिवो यदिदं[2] पृथिव्याः समानं योनिमभिसंबभूवथु ।
तस्य पृष्ठे सीदतु जातवेदा· शिव प्रजाभ्य इह राये अस्तु ॥
इति निवपति[3] ॥ ४ ॥
चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधु ॥
इति प्रवाह्याँ सिकताः ॥ ५ ॥ शर्करा निवप्स्यन्द्वेष्यं मनसा ध्यायेत् ॥ ६ ॥
अर्दद्धया शर्कराभिस्त्रिविष्टप्यजयो लोकान्प्रदिशश्चतस्र ।
इति निवपति ॥ ७ ॥
उदेनमग्ने अधि मातुः पृथिव्या विश आविश महत· सधस्तात् ।
आशु[5] त्वाजौ[6] दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥
इत्याखुकिरिं न्युप्य पिपीलिकाकिरिं गोष्ठात्करीषाणि लोहशकलान्यश्वत्थमुदुम्बरं विकङ्कतं शमीमशनिहतं वृक्षं पलाशमिति न्युप्य संसृजति—
सं व सृजामि [हृदयं[7] संप्रिया] हृदयानि व ।
आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥
इति ॥ ८ ॥ प्रादुर्भूतेषु रश्मिषु गार्हपत्यं मथित्वा दधाति । उदिते ऽनुदिते व्युदिते वा । उदित इतरौ ॥ ९ ॥ इतो यज्ञ इति गार्हपत्यलक्षणे ऽरणी आधायारणिसंभारमभिमन्त्रितं येन कृते ऽरणिर्गानितरयोर्दशहोत्रारणी समवदधाति ॥ १० ॥ चित्ति स्रुगित्यनुवाकं यजमानं याचयति ॥ ११ ॥ यो नो अग्नि:[9] ॥ मयि गृह्णामीति[10] मथिष्यन्जपति ॥ १२ ॥ सहाग्ने ऽग्निना जायस्व सह रय्या सह पोषेण

1 The ms मधुमदर्मि॰ first hand, मधुमों ऊर्मि॰ second hand
2 The ms यदद.
3 The ms निर्वपति
4 1
5 The ms second hand आशुं
6 The ms त्वाजो.
7 Perhaps originally the two KS verses VII 12 73, 17-20 were intended. Cp also TB I. 2. 1, 17, Mān I 5 2 19.
8-8 1
9 MS I 9 1
10 MS I 6 1

सह प्रजया सह ब्रह्मवर्चसेनेति मन्थति ॥ १३ ॥ जातमभिप्राणितिप्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेणेति ॥ १४ ॥ जाते वरं ददाति ॥ १५ ॥

अजीजनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं[1] वीलुजम्भम् ।

दश स्वसारो अग्रुवः समीचीः पुमाँसं जातमभिसँरभन्ताम् ॥

इत्यादत्ते ॥ १६ ॥ उपास्यति ब्रह्मा दक्षिणत आसीन उत्तरतो हिरण्यशकलम् ॥ १७ ॥ अतिप्रयच्छति यजमानो द्वेष्याय रजतम् ॥ १८ ॥ यदि द्वेष्यो न विद्येतापविध्येत् ॥ १९ ॥ सर्वत्रोपासनातिप्रदानम् ॥ २० ॥ आधानमन्त्रान्निगद्योपस्थकृत आदधाति ॥ २१ ॥ आयं गौरिति[4] सार्पराज्ञी[5] ॥ २२ ॥

इत्याधाने [चतुर्थे ऽध्याये] द्वितीयं खण्डम् ॥

यत्पृथिव्या अनामृतं संबभूव त्वे सचा ।

तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

इति प्रभृतिना तेन रुचा रुचमशीर्था इत्यन्तेन भूर्भुवो ऽङ्गिरसां त्वा देवानाँ मतेनादधानीत्याङ्गिरसो ब्राह्मण आदधीत । भृगूणां त्वेति भार्गवो भृग्वङ्गिरसां त्वेति भार्गवाङ्गिरस आदित्यानां त्वा देवानामित्यन्ये । अग्नेष्ट्वा देवस्येति[8] च । इन्द्रस्य त्वेति[8] राजन्यो मनोष्ट्वेति[8] वैश्य ऋभूणां त्वेति रथकार आछंदि त्वेति[8] सर्वेषाम् ॥ १ ॥ उभावाधानमन्त्रानादधानीत्यध्वर्युरादध इति यजमानः ॥ २ ॥ ज्वलन्तमाधायेये राये रमस्वेत्यभिमन्त्र्य सारस्वतौ त्वोत्सौ प्रावतामित्यन्तेनामा आयूँषि पवस इति तिसृभिस्तिस्र आश्वत्थीः समिध आदधाति[11] ॥ ३ ॥ गार्हपत्याद्दक्षिणाग्निमादधाति ॥ ४ ॥ समयार्ध्वं गते[12] त्वाहवनीये मथ्यमाहार्यं[13] वा ॥ ५ ॥ अष्टादशाद्यकामस्य ॥ ६ ॥ त्रिँशद्धामेति[4] सार्पराज्ञी ।

यदन्तरिक्षस्यानामृतं संबभूव त्वे सचा ।

तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

भुव इति व्याहृतिः[14] । यथर्ष्यध्वर्युरादधाति ॥ ७ ॥ गार्हपत्ये ऽग्निप्रणयना-

1 Note वीलु॰ for वीड्॰.

2 The ms अभि॰, but cp अतिप्रदानं in sūtra 20.

3 The ms ॰निप्र॰.

4 MS I. 6. 1.

5 The ms ॰ज्ञी .

6 MS I. 6. 1: 86. 4.

7 The ms second hand ॰मी॰. Cp MS ib 7 मतेनादधे.

8 MS I. 6. 1: 86. 7-9.

9-9 MS I. 6. 8. 127. 14-16.

10 MS I. 6. 1: 66. 8

11 Derived from MS I. 6. 5 95. 3

12 See MS I. 6. 6. 95. 17.

13 See MS I. 6. 11: 103 7-8.

14 The ms बभूव इति॰ first hand, भूर्भुवः स्वरिति व्याहृतयः second hand. Cp MS I. 5 4. 5.

न्याधाय रथ्यमेश्वं पुरस्तात्प्रत्यञ्चमवस्थाप्य तस्य दक्षिणकर्णे जपति—या वाजिन्नग्नेरिति[2] ॥ ८ ॥ ओजसे बलाय त्वेत्यग्निमुद्यच्छति ॥ ९ ॥ शूर्पे पाँसून्युप्याधस्तादुपयमनीरुपयच्छति ॥ १० ॥ प्राचीमनुप्रदिशमिति[3] प्रणयति ॥ ११ ॥ अश्वमग्रतो नयति[3] ॥ १२ ॥ कुल्फदघ्ने हरति जानुदघ्ने नाभिदघ्ने ऽसदघ्ने कर्णदघ्ने[4] ॥ १३ ॥ न कर्णदघ्नमत्युद्यच्छति[5] ॥ १४ ॥ दक्षिणतो हरति समं प्राणैर्धारयमाणः ॥ १५ ॥ समयाध्वे वरं ददाति ॥ १६ ॥ प्रणीयमाने दक्षिणतो ब्रह्मा धूर्गृहीतँ रथँ वर्तयति ॥ १७ ॥ यः सपत्नवान्भ्रातृव्यवान्वा स्यात्तस्य रथचक्रेण विहारं त्रिरनुपरिवर्तयेयुः[5] ॥ १८ ॥ अभ्यस्थाँ विश्वा इति पुरस्तात्प्रत्यञ्चमश्वमाहवनीयलक्षणमाक्रामयति ॥ १९ ॥ न प्राञ्चमवसृजेत् ॥ २० ॥ तमनिधायैवेति[6] ब्राह्मणव्याख्यातम् ॥ २१ ॥ अन्तश्चरतीति[7] सार्पराज्ञी ।

यद्दिवो ऽनामृतं संबभूव त्वे सचा ।

तदग्निरमये ददत्तस्मिन्नाधीयतामयम् ॥

भूर्भुवः स्वरिति[8] व्याहृतिर्यथर्ष्यग्ने हव्याय वोढवे इत्यन्तेन ॥ २२ ॥ पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्पार्श्वतः पदस्याधेयेपे राये रमस्वेत्यभिमन्त्र्य सारस्वतौ त्वोत्सौ प्रावतामित्यन्तेनाश्वेनेत्यघ्रापयेदे[10] ॥ २३ ॥ अरण्योर्निहितो जातवेदा इत्येतस्याँ साम गायेति ब्रूयादरण्योर्निहितयोः ॥ २४ ॥ अग्निं नरो दीधितिभिरित्येतस्याँ साम गायेति ब्रूयात्समवहितयोः ॥ २५ ॥ त्वेषस्ते धूम ऋण्वतीत्येतस्याँ साम गायेति ब्रूयाद्धूमे ॥ २६ ॥ अदर्शि गातुवित्तम इत्येतस्याँ साम गायेति ब्रूयाज्जाते ॥ २७ ॥ रथन्तरं गायति गार्हपत्य आधीयमाने ॥ २८ ॥ बृहदाहवनीय उद्ध्रियमाणे ॥ २९ ॥ वामदेव्यमाधीयमाने । यज्ञायज्ञियं च ॥ ३० ॥ निहिते वारवन्तीयँ वरुणपैर्णिनिर्हिते श्यैतम् ॥ ३१ ॥ पुरस्तात्सभायां आहवनीयात्सभ्यमाग्निमादधाति ॥ ३२ ॥ तस्य पश्चाच्चतुःशतमक्षान्निवपति ॥ ३३ ॥ सभ्यात्पूर्वमावसथ्यम् ॥ ३४ ॥ अग्नेर्मन्व इत्यजँ विमुच्य वाचँ विसृज्य दक्षिणा ददाति ॥ ३५ ॥ अश्वँ यदिनं ब्रह्मणे ऽध्वर्यवे वा ॥ ३६ ॥ अजमग्नीध उपवर्हणं

1 The ms रथम०.
2 MS I, 6, 2
3 See MS I 6, 4 92, 3
4 See MS I, 6, 6 96 4-7
5 Nearly identical with MS ib 14-15.
6 See MS I 6 4 92, 6.
7 MS I, 6, 6 96, 10
8 MS I, 6 1 85, 13.
9 MS I 8 8 127, 14, 16
10 That the horse should smell the newly established āhavanīya fire is not prescribed elsewhere.
11 RV III, 29, 2, SV I, 79.
12 RV VII, 1, 1, SV I, 72.
13 RV VI 2 6, SV I, 83.
14 RV VIII, 103 1, SV I, 47
15 See MS I, 6 7 98, 5-6.
16 An interpolation ?
17 MS III 16, 5 190, 6

सह प्रजया सह ब्रह्मवर्चसेनेति मन्थति ॥ १३ ॥ जातमभिप्राणिति—प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेणेति ॥ १४ ॥ जाते वरं ददाति ॥ १५ ॥

अजीजनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं वीलुजम्भम्[1] ।
दश स्वसारो अग्रुवः समीचीः पुमाँसं जातमभिसँरभन्ताम् ॥

इत्यादत्ते ॥ १६ ॥ उपास्यति ब्रह्मा दक्षिणत आसीन उत्तरतो हिरण्यशकलम् ॥ १७ ॥ अतिप्रयच्छति[2] यजमानो द्वेष्याय रजतम् ॥ १८ ॥ यदि द्वेष्यो न विद्येतापविध्येत् ॥ १९ ॥ सर्वत्रोपासनातिप्रदानम्[3] ॥ २० ॥ आधानमन्त्रान्निगद्योपस्थकृत आदधाति ॥ २१ ॥ आयं गौरिति[4] सार्पराज्ञी[5] ॥ २२ ॥

इत्याधाने [चतुर्थे ऽध्याये] द्वितीयं खण्डम् ॥

यत्पृथिव्या अनामृतं संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

इति प्रभृतिना तेन रुचा रुचमशीथा इत्यन्तेन भूर्भुवो ऽङ्गिरसां त्वा देवानां व्रतेनादधानीत्याङ्गिरसो ब्राह्मण आदधीत । भृगूणां त्वेति भार्गवो भृग्वङ्गिरसां त्वेति भार्गवाङ्गिरस आदित्यानां त्वा देवानामित्यन्ये । अग्नेष्ट्वा देवस्येति[6] च । इन्द्रस्य त्वेति[6] राजन्यो मनोष्ट्वेति[6] वैश्य ऋभूणां त्वेति रथकार आछदि त्वेति[6] सर्वेषाम् ॥ १ ॥ उभावाधानमन्त्रानादधानीत्यध्वर्युरादध इति यजमानः ॥ २ ॥ ज्वलन्तमाधायेपे राये रमस्वेत्यभिमन्त्र्य सारस्वतौ त्वोत्सौ प्रावतामित्यन्तेनामा आयूँषि पवस इति तिसृभिस्तिस्र आश्वत्थीः समिध आदधाति[11] ॥ ३ ॥ गार्हपत्याद्दक्षिणाग्निमादधाति ॥ ४ ॥ समयाध्वं गते[12] त्वाहवनीये मध्यमाहार्ये[13] वा ॥ ५ ॥ अप्स्वादन्नाद्यकामस्य ॥ ६ ॥ त्रिँशद्धामेति[8] सार्पराज्ञी ।

यदन्तरिक्षस्यानामृतं संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

भुव इति व्याहृतिः[14] । यथर्ष्यध्वर्युरादधाति ॥ ७ ॥ गार्हपत्ये ऽग्निप्रणयना-

1 Note वीलु॰ for वीडु॰.
2 The ms अभि॰, but cp अतिपदानं in sūtra 20.
3 The ms ॰निप्र॰.
4 MS I. 6. 1.
5 The ms ॰ज्ञी॰.
6 MS I. 6. 1: 86. 4.
7 The ms second hand ॰मी॰. Cp MS ib 7 व्रतेनादधे.
8 MS I. 6. 1: 86. 7-9.
9-9 MS I. 8. 8: 127. 14-16.
10 MS I. 6. 1; 66. 8
11 Derived from MS I. 6. 5 95 3
12 See MS I. 6. 6. 95. 17.
13 See MS I. 6. 11: 103. 7-8.
14 The ms यभुव इति॰ first hand, भूर्भुवस्वरिति व्याहृतयः second hand. Cp MS I. 5 4. 5.

गामस्य तदहः सभायाँ विदीव्येयुः[1] ॥ १२ ॥ तत्र शतमक्षान्यजमानाय प्रयच्छति[2] ॥ १३ ॥ तत्कृतँ विचिनुयात् ॥ १४ ॥ अद्दि[3] सन्तः परूँषि विशँस्युः[3] ॥ १५ ॥ ताँ समासन्नय उपहरेर्दे ॥ १६ ॥ तया यदन्नं जयेत्तद्ब्राह्मणेभ्यो दद्यात्[4] ॥ १७ ॥ यतो नो ऽहिर्बुध्न्यं इति सभावसथ्ययोर्जुहोति ॥ १८ ॥ प्र नूनं ब्रह्मणस्पतिरिति[5] हिरण्यं निधाय मध्ये परिषदः ॥ १९ ॥ घर्मं शिर इति गार्हपत्यमुपतिष्ठते ऽर्को ज्योतिरिति[6] दक्षिणाग्निम्[7] वात. प्राण इत्याहवनीयम् ॥ २० ॥ अविषं नः पितुं पचेति[8] सर्वत्रानुषजेत् ॥ २१ ॥ कल्पेतां द्यावापृथिवी[9] इति क्लृप्तिसामनसीभ्याँ विहारम् ॥ २२ ॥ समाप्येष्टिमग्नये पचमानायाष्टाकपालं निर्वपेत् ॥ २३ ॥ त्रिँशन्मानँ हिरण्यं दक्षिणा ॥ २४ ॥ द्विहविषं द्वितीयमग्नये पावकायाग्नये च शुचये ऽष्टाकपालौ ॥ २५ ॥ त्रिँशन्मानं पूर्वस्य दक्षिणा चत्वारिँशन्मानमुत्तरस्य ॥ २६ ॥ चतुर्विँशमुत्तमम् ॥ २७ ॥ आग्नावैष्णवमेकादशकपालं निर्वपेद्विष्णवे च शिपिविष्टाय त्र्युद्धौ घृते चरुमदित्यै घृते चरुमग्नीषोमीयमेकादशकपालम् ॥ २८ ॥ सद्यो निर्वपेद्द्वादशाहे सँवत्सरे वा ॥ २९ ॥ सोमेनायक्ष्यमाणस्योत्तरासां तिसृणाँ विकल्पः[1] ॥ ३० ॥ फलीकृतानां पूषा वै इति चरव्याँस्तण्डुलानावपति ॥ ३१ ॥ ध्रुवमसीति[11] प्रथमेन कपालमन्त्रेण चरुमुपदधाति ॥ ३२ ॥ मेक्षणेन द्वितीयाँ स्विष्टकृतः पश्चावदानस्य चरोरवद्यति ॥ ३३ ॥ शँय्वन्ते[12] ऽग्रेणाहवनीयमादित्यं ब्रह्मणे परिहरेयुः[13] ॥ ३४ ॥ तं चत्वार ऋत्विज आर्षेया द्वौ द्वौ सह प्राश्नन्ति[5] ॥ ३५ ॥ तेभ्यः साण्डँ वत्सतरं ददाति धेनुं च ॥ ३६ ॥ द्वादशरात्रमजस्रेष्वग्निष्वाज्येनाग्निहोत्रं जुहुयात् ॥ ३७ ॥ पूर्वस्मिन्पर्वणीष्टिपशुबन्धानां कालः ॥ ३८ ॥ पौर्णमास्यारम्भणौ दर्शपूर्णमासौ ॥ ३९ ॥ पौर्णमास्यामादधानः पूर्वां पौर्णमासीमग्न्याधेयायोपवसेदुत्तरामन्वारम्भणीयायै पौर्णमासीं च ॥ ४० ॥ उपवसथे ऽन्वारम्भणीयायाः सप्ताज्याहुतीर्जुहोति—

निवेशनी संगमनी वसूनाँ विश्वा रूपाणि वसून्यावेशयन्ती ।
सहस्रपोषँ सुभगे रराणा सा न आगाद्वर्चसा सँविदाना ॥

1 The ms विदीव्येयु first hand, दीव्येयु second hand
In MS mss (I 6, 11 104 6) both the forms are found
2 See MS ib 4
3 See MS ib 6 The ms second hand विशासतेति
4 *Identical with MS ib 6-7*
5 See MS ib 7.
6 MS I 6 2
7 See MS I, 6 8 98, 21.
8 Nearly identical with MS ib 99 *5-7, 10.*
9 Cp MS I, 6, 11 103, 11-12.
10 MS IV, 1 1 2 6.
11 The ms ध्रुवोसीति Cp I 3, 1 3 MS I 1, 8 4 8.
12 The ms second hand strikes off the word.
13 Based on MS I 6 8 99 16-17.

च सर्वसूत्रम् ॥ ३७ ॥ क्षौममिदमध्वर्यवे ॥ ३८ ॥ पुरस्ताद्विहारस्यानड्वाहं धेनुं च पश्चात्परीत्य होत्रे ॥ ३९ ॥ द्विहायनमिथुनौ रथ इति सर्वेषामविनिर्दिष्टम् ॥ ४० ॥ पड्द्वादशचतुर्विंशत्यपरिमितगवाँ संख्याविकल्पः ॥ ४१ ॥ अनृतवदनं ब्राह्मणोपवासनं स्वकृत इरिणे ऽवसानमन्तर्नाव्युदकाचमनमृवीसपकाशनं क्लिन्नकाष्ठाभ्याधानमिति वर्जयेत् ॥ ४२ ॥ अग्नीनुपतिष्ठते यजमानः ॥ ४३ ॥

इत्याधाने [चतुर्थे ऽध्याये] तृतीयं खण्डम् ॥

पशून्मे शंस्य पाहीत्याहवनीयं प्रजां मे नर्य पाहीति गार्हपत्यमन्नं मे बुध्य पाहीति दक्षिणाग्निं सप्रथः सभां मे पाहीति सभ्यमहिर्बुध्न्य मन्त्रं मे पाहीत्यावसथ्यम् ॥ १ ॥ आहवनीये नानावृक्षीयाः समिध आदधाति—तां सवितुर्वरेण्यस्येति शमीमयीं विधेम ते इति वैकङ्कतीं प्रेद्धो अग्न इत्यौदुम्बरीम् ॥ २ ॥ या ते अग्ने पवमाना पशुषु प्रिया तनूर्या पृथिव्यां याग्नौ या रथन्तरे या गायत्रे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने पावकाप्सु प्रिया तनूर्यान्तरिक्षे या वाते या वामदेव्ये या त्रैष्टुभे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि [यादित्ये] या बृहति या स्तनयित्नौ या जागते छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहेति तिस्र आहुतीः ॥ ३ ॥ समुद्रादूर्मिरिति तिसृभिस्तिस्रः शमीमयीर्घृताक्ताः समिध आदधाति ॥ ४ ॥ ये अग्नय समनसे इत्यौदुम्बरीमनक्ताम् ॥ ५ ॥ क्षुच सेदिश्च क्षितिश्च सदान्वा चानामतिश्चानाहुतिश्च निर्ऋतिरेतास्ते अग्ने तन्वो वर्तिमतीस्तास्तं गच्छन्तु यं द्विष्म इति द्वेष्यं मनसा ध्यायन्यजमानो जपति ॥ ६ ॥ चतुर्गृहीतमाज्यं पूर्णाहुतिमग्रेणाहवनीयं गत्वोदङ्ङावृत्य सप्त ते अग्ने इति जुहोति ॥ ७ ॥ हुतायां धेनुं ददाति ॥ ८ ॥ ये अग्नयो दिवे इति द्वितीयाम् ॥ ९ ॥ प्रतिपरीत्य सम्राट् च स्वराट् चेति पर्यायैराहवनीयमुपस्थायाग्नेयमष्टाकपालं निर्वपति ॥ १० ॥ उपसन्ने हविष्यप्रोक्षिते निषसाद धृतव्रत इति समूह्याद्धाम्हिरण्यं निधार्य मध्याधिदेवने राजन्यस्य जुहुयात् ॥ ११ ॥

1 The ms second hand सा०, but cp MS I. 6. 4 92. 21.
2 We expect dual क्षौमे See MS I 6 4. 93 7–8.
3 The ms second hand ०विंशतिर०.
4 The ms first hand ०धासनं. Cp Mān I 5 6. 13.
5 MS I. 5. 14
6 MS II. 10 6
7 The ms बृहस्पति first hand, बृहस्पतौ second hand.
8 MS I. 6 2.
9 The ms first hand उपवसन्ने
10 The ms adds जुहोति, perhaps under the influence of KS VIII. 7: 90 7.
11 From MS I. 6. 11. 104 3
12 Ib 1–2.

गामस्य तदह्नः सभायाँ विदीव्येयुः[1] ॥ १२ ॥ तत्र शतमक्षान्यजमानाय प्रयच्छति[2] ॥ १३ ॥ तत्कृतँ विचिनुयात् ॥ १४ ॥ अह्निँ सन्तः परूँषि विशँस्युः[3] ॥ १५ ॥ ताँ सभासद्भ्य उपहरेत् ॥ १६ ॥ तया यदन्नं जयेत्तद्ब्राह्मणेभ्यो दद्यात् ॥ १७ ॥ उतो नो ऽहिर्बुध्न्य इति सभावसथ्ययोर्जुहोति ॥ १८ ॥ प्र नूनं ब्रह्मणस्पतिरिति[4] हिरण्यं निधाय मध्ये परिषदः ॥ १९ ॥ घर्मः शिरं इति गार्हपत्यमुपतिष्ठते ऽर्को ज्योतिरिति[5] दक्षिणाग्निँ[6] वातः प्राण इत्याहवनीयम् ॥ २० ॥ अविषं नः पितुं पचेति[7] सर्वत्रानुषजेत् ॥ २१ ॥ कल्पेतां द्यावापृथिवी[8] इति फलक्षिसामनसीभ्याँ विहारम् ॥ २२ ॥ समाप्येष्टिमग्नये पवमानायाष्टाकपालं निर्वपेत् ॥ २३ ॥ त्रिँशन्मानँ हिरण्यं दक्षिणा ॥ २४ ॥ द्विहविषं द्वितीयमग्नये पावकायाग्नये च शुचये ऽष्टाकपालौ ॥ २५ ॥ त्रिँशन्मानं पूर्वस्य दक्षिणा चत्वारिँशन्मानमुत्तरस्य ॥ २६ ॥ चतुर्विँशमुत्तमम् ॥ २७ ॥ आग्नावैष्णवमेकादशकपालं निर्वपेद्विष्णवे च शिपिविष्टाय त्र्युद्धौ घृते चरुमदित्यै घृते चरुमग्नीषोमीयमेकादशकपालम् ॥ २८ ॥ सद्यो निर्वपेद् द्वादशाहे सँवत्सरे वा ॥ २९ ॥ सोमेनायक्ष्यमाणस्योत्तरासां तिसृणाँ विकल्पः[9] ॥ ३० ॥ फलीकृतानां पूषा वै[10] इति चरव्याँस्तण्डुलानावपति ॥ ३१ ॥ ध्रुवमसीति[11] प्रथमेन कपालमन्त्रेण चरुमुपदधाति ॥ ३२ ॥ मेक्षणेन द्वितीयाँ स्विष्टकृतः पञ्चावदानस्य चरोरवद्यति ॥ ३३ ॥ शँस्यन्ते[12] ऽग्रेणाहवनीयमादित्यं ब्रह्मणे परिहरेयुः[13] ॥ ३४ ॥ तं चत्वार ऋत्विज आर्षेया द्वौ द्वौ सह प्राश्नन्ति ॥ ३५ ॥ तेभ्यः साण्डँ वत्सतरं ददाति धेनुं च ॥ ३६ ॥ द्वादशरात्रमजस्रेष्वग्निष्वाज्येनाग्निहोत्रं जुहुयात् ॥ ३७ ॥ पूर्वस्मिन्पर्वणीष्टिपशुबन्धानां कालः ॥ ३८ ॥ पौर्णमास्यारम्भणी दर्शपूर्णमासौ ॥ ३९ ॥ पौर्णमास्यामादधानः पूर्वां पौर्णमासीमग्न्याधेयायोपवसेदुत्तरामन्वारम्भणीयायै पौर्णमासीं च ॥ ४० ॥ उपवसथे ऽन्वारम्भणीयायाः सप्ताज्याहुतीर्जुहोति—

निवेशनी संगमनी वसूनाँ विश्वा रूपाणि वसून्यावेशयन्ती ।
सहस्रपोषँ सुभगे रराणा सा न आगाद्वर्चसा सँविदाना ॥

1 The ms विदीव्येयु first hand, दीव्येयुः second hand. In MS mss (I. 6. 11: 104. 6) both the forms are found.

2 See MS ib 4.

3 See MS ib 6. The ms second hand विशासतेति.

4 Identical with MS ib 6-7.

5 See MS ib 7.

6 MS I. 6. 2

7 See MS I. 6. 8· 98. 21.

8 Nearly identical with MS ib 99. 5-7, 10.

9 Cp MS I. 6. 11: 103. 11-12.

10 MS IV. 1. 1: 2. 6.

11 The ms ध्रुवोसीति. Cp I. 3. 1. 3. MS I. 1. 8 4. 6.

12 The ms second hand strikes off the word.

13 Based on MS I. 6 8 99. 16-17.

च सर्वसूत्रम् ॥ ३७ ॥ क्षौमेमिदमध्वर्यवे ॥ ३८ ॥ पुरस्ताद्धिरण्यस्थानड्वाहं धेनुं च पश्चात्परीत्य होत्रे ॥ ३९ ॥ द्विहायनमिथुनौ रथ इति सर्वेषामविनिर्दिष्टम् ॥ ४० ॥ षड्द्वादशचतुर्विंशत्यपरिमितगवाँ संख्याविकल्प. ॥ ४१ ॥ अनृतवदनं ब्राह्मणोपवासनँ स्फ्त इरिणे ऽवसानमन्तर्नाव्युदकाचमनमृषीसपकाशनं क्लिन्नकाष्ठाभ्याधानमिति वर्जयेत् ॥ ४२ ॥ अग्नीनुपतिष्ठते यजमान ॥ ४३ ॥

इत्याधाने [चतुर्थे ऽध्याये] तृतीय खण्डम् ॥

पशून्मे शंस्य पाहीत्याहवनीयं प्रजां मे नर्य पाहीति गार्हपत्यमन्नं मे बुध्य पाहीति दक्षिणाग्निं सभ्य सभां मे पाहीति सभ्यमहिर्बुध्न्य मन्त्र मे पाहीत्यावसथ्यम् ॥ १ ॥ आहवनीये नानावृत्तीयाः समिध आदधाति—तां सवितुर्वरेण्यस्येति शमीमयीं विधेम ते इति वैकङ्कतीं प्रेद्धो अग्न इत्यौदुम्बरीम् ॥ २ ॥ या ते अग्ने पवमाना पशुषु प्रिया तनूर्या पृथिव्यां याग्नौ या रथन्तरे या गायत्रे छन्दसीद ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने पावकाप्सु प्रिया तनूर्यान्तरिक्षे या वाते या वामदेव्ये या त्रैष्टुभे छन्दसीद ते तामवरुन्धे तस्यै ते स्वाहा ॥ या ते अग्ने सूर्ये शुचि प्रिया तनूर्या दिवि [यादित्ये] या बृहति या स्तनयित्नौ या जागते छन्दसीद ते तामवरुन्धे तस्यै ते स्वाहेति तिस्र आहुतीः ॥ ३ ॥ समुद्रादूर्मिरिति तिसृभिस्तिस्र· शमीमयीर्घृताक्ताः समिध आदधाति ॥ ४ ॥ ये अग्नय समनसं इत्यौदुम्बरीमनक्ताम् ॥ ५ ॥ क्षुच सेदिश्च निर्ऋतिश्च सदान्वा च नामतिश्चानाहुतिश्च निर्ऋतिरेतास्ते अग्ने तन्वो वर्तिमतीस्तास्त गच्छन्तु य द्विष्म इति द्वेष्यं मनसा ध्यायन्यजमानो जपति ॥ ६ ॥ चतुर्गृहीतमाज्यं पूर्णाहुतिमग्रेणाहवनीयं गत्वोदङ्भूत्य सप्त ते अग्ने इति जुहोति ॥ ७ ॥ हुतायां धेनुं ददाति ॥ ८ ॥ ये अग्नयो दिवे इति द्वितीयाम् ॥ ९ ॥ प्रतिपरीत्य सम्राट् च स्वराट् चेति पर्यायैराहवनीयमुपस्थायाग्नेयमष्टाकपालं निर्वपति ॥ १० ॥ उपसन्ने हविष्यप्रोक्षिते निषसाद धृतव्रत इति समूह्याग्नान्हिरण्यं निधाये मध्याधिदेवने राजन्यस्य जुहुयात् ॥ ११ ॥

1 The ms second hand सा०, but cp MS I 6 4 92 21
2 We expect dual क्षौमे See MS I 6 4 93 7 8
3 The ms second hand ०विंशतिर०
4 The ms first hand ०धासन Cp Mān I 5 6 13
5 MS I 5 14
6 MS II 10 6
7 The ms बृहस्पति first hand, बृहस्पतौ second hand
8 MS I 6 2
9 The ms first hand उपवसन्ने
10 The ms adds जुहोति, perhaps under the influence of KS VIII 7 90 7
11 From MS I 6 11 104 3
12 Ib 1-2

गामस्य तदहः सभायाँ विदीव्येयुः[1] ॥ १२ ॥ तत्र शतमक्षान्यजमानाय प्रयच्छति[2] ॥ १३ ॥ तत्कृतँ विचिनुयात् ॥ १४ ॥ अद्वि[3] सन्तः परूँषि विशँस्युः[4] ॥ १५ ॥ ताँ सभासद्भ्य उपहरेत् ॥ १६ ॥ तया यदन्नं जयेत्तद्ब्राह्मणेभ्यो दद्यात् ॥ १७ ॥ उतो नो ऽहिर्बुध्न्य इति सभावसथ्ययोर्जुहोति ॥ १८ ॥ प्र नूनं ब्रह्मणस्पतिरिति[6] हिरण्यं निधाय मध्ये परिषदः ॥ १९ ॥ घर्मः शिर इति गार्हपत्यमुपतिष्ठते ऽर्को ज्योतिरिति[6] दक्षिणाग्निँ वातः प्राण इत्याहवनीयम् ॥ २० ॥ अविषं नः पितुं पचेति[8] सर्वत्रानुषजेत् ॥ २१ ॥ कल्पेतां द्यावापृथिवी[9] इति फलुसिलामनसीभ्याँ विहारम् ॥ २२ ॥ समाप्येष्टिमग्नये पवमानायाष्टाकपालं निर्वपेत् ॥ २३ ॥ त्रिँशन्मानँ हिरण्यं दक्षिणा ॥ २४ ॥ द्विहविषं द्वितीयमग्नये पावकायाग्नये च शुचये ऽष्टाकपालौ ॥ २५ ॥ त्रिँशन्मानं पूर्वस्य दक्षिणा चत्वारिँशन्मानमुत्तरस्य ॥ २६ ॥ चतुर्विँशमुत्तमम् ॥ २७ ॥ आग्नावैष्णवमेकादशकपालं निर्वपेद्विष्णवे च शिपिविष्टाय त्र्युद्धौ घृते चरुमदित्यै घृते चरुमग्नीषोमीयमेकादशकपालम् ॥ २८ ॥ सद्यो निर्वपेद् द्वादशाहे सँवत्सरे वा ॥ २९ ॥ सोमेनायक्ष्यमाणस्योत्तरासां तिसृणाँ विकल्पः[1] ॥ ३० ॥ फलीकृतानां पूषा वै इति चरव्याँस्तण्डुलानावपति ॥ ३१ ॥ ध्रुवमसीति[11] प्रथमेन कपालमन्त्रेण चरुमुपदधाति ॥ ३२ ॥ मेक्षणेन द्वितीयाँ स्विष्टकृतः पश्चादवदानस्य चरोरवद्यति ॥ ३३ ॥ शँय्वन्ते[12] ऽग्रेणाहवनीयमादित्यं ब्रह्मणे परिहरेयुः[13] ॥ ३४ ॥ तं चत्वार ऋत्विज आर्षेया द्वौ द्वौ सह प्राश्नन्ति[3] ॥ ३५ ॥ तेभ्यः साण्डँ वत्सतरं ददाति धेनुं च ॥ ३६ ॥ द्वादशरात्रमजस्रेष्वग्निष्वाज्येनाग्निहोत्रं जुहुयात् ॥ ३७ ॥ पूर्वस्मिन्पर्वणीष्टिपशुबन्धानां कालः ॥ ३८ ॥ पौर्णमास्यारम्भणौ दर्शपूर्णमासौ ॥ ३९ ॥ पौर्णमास्यामादधानः पूर्वो पौर्णमासीमन्वाधेयायोपवसेदुत्तरामन्वारम्भणीयायै पौर्णमासीं च ॥ ४० ॥ उपवसथे ऽन्वारम्भणीयायाः सस्राज्याहुतीर्जुहोति—

निवेशनी संगमनी वसूनाँ विश्वा रूपाणि वसून्यावेशयन्ती ।
सहस्रपोषँ सुभगे रराणा सा न आगाद्वर्चसा सँविदाना ॥

1 The ms विदीव्येयु first hand, दीव्येयु second hand
In MS mss (I. 6. 11 104 6) both the forms are found
2 See MS ib 4
3 See MS ib 6. The ms second hand विशासतेति.
4 Identical with MS ib 6-7.
5 See MS ib 7.
6 MS I 6 2
7 See MS I. 6. 8 98. 21.
8 Nearly identical with MS ib 99 5-7, 10.
9 Cp MS I. 6. 11 103. 11-12.
10 MS IV. 1. 1 2. 6.
11 The ms ध्रुवोसीति. Cp I 3. 1. 3 MS I. 1. 6 4. 8.
12 The ms second hand strikes off the word.
13 Based on MS I. 6 8 99 16-17.

इति।

अग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम्।
माध्यं हि पौर्णमास्यं जुषेतां ब्रह्मणा वृद्धौ सुकृतेन स्याताम्।
अथास्मभ्यं सर्ववीरं रयिं नियच्छतम्॥

इति पार्वणौ च होमौ। या सरस्वती वेशयमनी या सरस्वती वेशभगीनेति[1] चतुर्होत्रा च मनसा॥४१॥ आग्नावैष्णवमेकादशकपालं निर्वपेदग्नये च भगिनेऽष्टाकपालं यः कामयेत भगवान् स्यामिति[2]॥४२॥ सरस्वत्यै चरुं सरस्वते द्वादशकपालं इति दर्शे[3]ऽपि॥४३॥ पुरस्तात्स्विष्टकृतो जयैर्जुहोति॥४४॥ आकूताय स्वाहाकूतये स्वाहेति[4] द्वादश पर्यायाः॥४५॥ प्रजापतिं प्रायच्छदिति[5] त्रयोदशीम्॥४६॥ अग्ने बलदेति चतुर्दशीं[6] यः कामयेत चित्रमस्यां जनतायां स्यामिति[7]॥४७॥ चित्रमस्यां भवति[8]॥४८॥ मिथुनौ गावौ दक्षिणा॥४९॥

इत्याधाने [चतुर्थे ऽध्याये] चतुर्थं खण्डम्॥

इति[10] चतुर्थोऽध्यायः[9]॥

---

1 MS I 4 3 51 7–8
2 Identical with MS I 4 14 63 13
3 From MS I 4 15 64 14–15
4 From MS ib 65 2 3
5 See MS I 4 14 63 17 sqq
6 MS ib 64 6
7 See MS ib 8
8 Derived from MS I 4 14 64 9–12
9 Identical with TS III 5 1 4
10 The ms adds प्राक्सौमिके

यस्यै गार्हपत्याहवनीयावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं कुर्वीतात्मना वा यत्र विधुरत्वं नीयादरणिनाशे वा समारूढेष्वग्निषु नष्टाग्नेः ॥ १ ॥ उत्सादनीयामिष्टिं निर्वपत्यग्नये वैश्वानराय द्वादशकपालम् ॥ २ ॥ पुरस्तात्स्विष्टकृत उत्सादनीयान्होमाञ्जुहोति—या ते अग्ने उत्सीदतः पवमाना पशुषु प्रिया तनूस्तया सह पृथिवीमारोह गायत्रेण [च] छन्दसा । या ते अग्ने उत्सीदत पावकाप्सु प्रिया तनूस्तया सहान्तरिक्षमारोह त्रैष्टुभेन च छन्दसा । या ते अग्ने उत्सीदत सूर्ये शुचिः प्रिया तनूस्तया सह दिवमारोह जागतेन च छन्दसेति ॥ ३ ॥ ज्वलत उत्साद्य सँवत्सर आदधीत ॥ ४ ॥ रोहिण्यनूराधापुनर्वसुस्तेषामेकस्मिन्वर्षासु शरदि वा पर्वण्यादधीत ॥ ५ ॥ सर्वं पुनराधेये यथाग्न्याधेयं इष्टिवर्गम् ॥ ६ ॥ संभारान्युप्योपोलपौन्दर्भौश्चिवपति ॥ ७ ॥ सार्पराज्ञीभिर्गार्हपत्यं नित्येन चादधाति ॥ ८ ॥ आहितानुपोलपैर्दर्भैरग्नीन्समिन्द्धे यजमानः—यत्त्वा क्रुद्धः परोवापेति[4] गार्हपत्यं यत्ते मन्युपरोप्तस्येति[4] दक्षिणाग्निँ यत्ते भामेन विचकार[4] ॥ पुनस्त्वादित्या[5] इत्याहवनीयम् ॥ ९ ॥ पुरस्तात्पूर्णाहुतेः संततिहोमाञ्जुहोति—त्रयस्त्रिँशत्तन्तवो इति पञ्चभिः पञ्चाहुतीः ॥ १० ॥ आग्नेयमष्टाकपालं निर्वपेत्पञ्चकपालँ वा ॥ ११ ॥ पुनरूर्जा निवर्तस्वेति[6] पुरस्तात्प्रयाजानां जुहुयात् सह रय्या निवर्तस्वेत्युपरिष्टादनुयाजानाम् ॥ १२ ॥ अग्नाग्ने ऽग्नावग्ने ऽग्निनाग्ने ऽग्निमग्ने देवे ऽग्नौ देवो ऽग्निरिति विभक्तयः[7] ॥ १३ ॥ तासाँ होता चतुर्षु प्रयाजेषु चतस्रो विदधाति द्वयोरनुयाजयोर्द्वे ॥ १४ ॥ सर्वमाग्नेयं कुर्वन्त्युपाँश्वोत्तमादनुयाजात् ॥ १५ ॥ पुरस्तात्स्विष्टकृतः सलिल सलीर्ग[8]

1 The ms अस्य

2 The ms ॰धेयम् first hand, ॰धेये second hand.

3 The word is from MS I 7 2 110,15

4 MS I, 7, 1 has परोवप, and विचक्र in the third mantra.

5 MS I, 7, 4.

6 The entire sutra is identical with MS ib. 112, 11-16.

7 The six vibhaktis are referred to in MS I, 7, 3 112, 1.

8 The ms second hand सलिग. MS mss (I 7, 1 110, 3) also show both the forms.

इत्यादित्यनामानि जुहोति ॥ १६ ॥ पुनरुत्स्यूतँ वासो दक्षिणा पुनर्नवो[1] रथः पुनरुत्सृष्टो ऽनड्वान्शतमानँ हिरण्यम् [2] ॥ १७ ॥ उभयीर्दक्षिणा ददाति ॥ १८ ॥ समाप्येऽग्निमाग्निवारुणमेकादशकपालं निर्वपेत् ॥ १९ ॥ तृतीयाधेये ऽन्याधेये ऽग्निमाधायोपरिष्टात्पूर्णाहुतेरादित्यनामानि जुहोति ॥ २० ॥

इति पुनराधाने[5] [ पञ्चमे ऽध्याये ] प्रथमं खण्डम् ॥

सायं प्रातरग्निहोत्राय गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयेत् ॥ १ ॥ गृह्णीयाद्वा नक्तम् ॥ २ ॥ वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा[6] श्रोत्रेणाग्नीध्रेणैतैस्त्वा पञ्चभिर्दैव्यै[7]र्ऋत्विग्भिरुद्धरामीत्युद्धरति ॥ ३ ॥

उद्धृत उद्धर पाप्मानं[8] मा यदविद्वान्यच्च विद्वाँश्चकार ।
अह्ना यदेनः कृतमस्ति पापँ सर्वस्मादुद्धृतो मा पाप्मनो मुञ्च तस्मात् ॥
इत्यपराह्णे । रात्र्या यदेन कृतमस्तीति प्रातः ॥ ४ ॥
अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै ।
तेनाग्ने काममिमं जयामसि प्रजापतिर्यः प्रथमो जिगायाग्निमग्नौ स्वाहा ॥

इत्यपराह्णे । सूर्यमग्नौ स्वाहेति प्रातः ॥ ५ ॥ गतश्रियो नित्यधारणमाहवनीयस्य यथाकाम्यगतश्रियः ॥ ६ ॥ प्रदोषमग्निहोत्रं जुहुयान्नक्षत्रं दृष्ट्वानस्तमिते वा ॥ ७ ॥ व्युच्छन्त्यां प्रातर्व्युष्टायामुदिते ऽनुदिते वा ॥ ८ ॥ सायमारम्भणमग्निहोत्रं प्रागपवर्गम् ॥ ९ ॥ अरत्निमात्री वैकङ्कत्यग्निहोत्रहवणी स्थाल्यार्यकृत्यूर्ध्वकपालाचक्रवृत्ता ॥ १० ॥ तस्यां दोहयति दक्षिणतो ऽन्येन शूद्रादुदीचीमवस्थाप्य ॥ ११ ॥ पूर्वौ स्तनौ ज्येष्ठस्य ज्यैष्ठिनेयस्य वा गतश्रियो वापरौ कनिष्ठस्य कानिष्ठिनेयस्य बुभूषतो वा । सर्वानितरेषाम् ॥ १२ ॥ अनुसंमृशति ॥ १३ ॥ अग्ने शुन्धस्वेत्याहवनीयं परिसमूहत्यग्ने गृहपते शुन्धस्वेति गार्हपत्यमग्ने वह्ने शुन्धस्वेति दक्षिणाग्निम् ॥ १४ ॥ अग्नीन्परिस्तीर्य यजमानाहृतं महान्तमिध्ममुपसमाधाय पर्युक्षत्—ऋतसत्याभ्यां त्वा पर्युक्षामीति सायँ सत्यऋताभ्यां त्वा पर्युक्षामीति प्रातः ॥ १५ ॥ संततामुदकधाराँ स्रावयति गार्हपत्याद्ध्याहवनीयात्—यज्ञस्य संततिरसि यज्ञस्य त्वा सं-

1 The ms second hand °र्णवो MS mss show both the forms
2 Derived from MS I. 7. 2 110 12-13.
3 See MS I 7. 5 113 20.
4 The ms °मारण° first hand, °मारुत° second hand Cp Āp V. 29. 9.
5 The ms पुनराधेये.
6-6 The ms first hand मनसाध्वर्युणा In that case the original must have been चक्षुषा ब्रह्मणा मनसाध्वर्युणा.
7 The ms first hand °र्दैव्यै°.
8 To be emended to पाप्मनो ?
9 Based on MS I 8. 3 118. 2-3.

ततये नयामीति ॥ १६ ॥ अपोढं जन्यं भयमपोढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचो ऽङ्गारानपोह्याधिश्रयति—

इडायास्पदं घृतवच्चराचरमग्ने हविरिदं जुषस्व ।
ये ग्राम्याः पशवो ये चारण्यास्तेषाँ सर्वेषामिह पुष्टिरस्तु ॥

इति ॥ १७ ॥ उद्भव· स्थोदहं प्रजया पशुभिर्भूयासमिति[1] ज्योतिषावेत्तते ॥ १८ ॥ हरस्ते मा विनैषमिति स्रुवेणोदविन्दुं प्रतिनयति दध्याज्ययोः[2] ॥ १९ ॥ तेन घर्मेण पुनरवोद्यान्तरितँ रक्षो ऽन्तरिता अरातय इति तृणेन त्रिः पर्यग्नि कृत्वा वर्त्म कुर्वन्नुदगुद्वासयति—घर्मो ऽसि रायस्पोषवनिरिहोर्जँ[3] श्रयस्वेति ॥ २० ॥ प्रत्यूढं जन्यं भयं प्रत्यूढाः सेना अभीत्वरीरित्यङ्गारान्प्रत्यूह्य निष्टप्तँ रक्षो निष्टप्ता अरातय इति स्रुचं निष्टप्य प्रणवमुक्त्वोन्नेष्यामीति यजमानँ सायमामन्त्रयत उन्नयामीति प्रातः ॥ २१ ॥ अग्नये च त्वा पृथिव्यै चोन्नयामि । वायवे च त्वान्तरिक्षाय चोन्नयामि । सूर्याय च त्वा दिवे चोन्नयामि । अद्भ्यश्च त्वौषधीभ्यश्चोन्नयामीति चतुरुन्नयति ॥ २२ ॥ सर्वान्पूर्णान्यथालाभँ वा ॥ २३ ॥ यं कामयेतानुज्येष्ठं प्रजया ऋध्नुयादिति[4] ब्राह्मणव्याख्यातम् ॥ २४ ॥ उन्नीया होमाद्वाचँ यच्छेत् ॥ २५ ॥ पशून्मे यच्छेत्यभिहृत्य सादयति ॥ २६ ॥ दशहोत्राभिमृश्य सजूर्देवैः सायँयावभिरिति सायमुन्नीतमभिमृशति सजूर्देवैः प्रातर्यावभिरिति प्रातः ॥ २७ ॥ इदं देवानामित्युन्नीतमभिमृशतीदमु नः सहेत्यवशिष्टम् ॥ २८ ॥ उर्वन्तरिक्षँ वीहीति[5] समया गार्हपत्यँ हरति[6] ॥ २९ ॥ स्वाहाग्नये वैश्वानराय स्वाहेति समयाध्वे[7] नियच्छति ॥ ३० ॥ वायवे त्वेत्युद्यच्छति ॥ ३१ ॥ आयुर्मे यच्छेति[8] पश्चादाहवनीयस्य दर्भेषु सादयति ॥ ३२ ॥ एषा ते अग्ने समिदित्याहवनीये प्रादेशमात्रीं पालाशीँ[10] समिधमादधाति ॥ ३३ ॥ द्व्यङ्गुले ज्वलन्तीमभिजुहोति—भूर्भुवः स्वरग्निहोत्रँ[11] होत्रैरग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति[13] सायँ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति[14] प्रातः ॥ ३४ ॥ इषे त्वेत्यवाचीनँ[15] सायं लेपमवमार्ष्ट्यूर्जे त्वेत्यूर्ध्वँ

1 MS I. 8. 4. 119. 12.
2 दध्याज्ययोः is not clear
3 MS I. 8. 4 119. 18-19.
4 MS I. 1. 5. 3. 5.
5 MS I. 1. 2 2. 4
6 Cp MS I. 8. 4. 120 8 समयाग्निँ हरन्ति.
7 ? The ms समयाज्ये first hand, समयोज्ये second hand, Mān I. 6. 1 31 समयार्धे.
8 MS I. 2. 3: 12. 14.
9 MS I. 8. 4 120. 10.
10 MS I. 8. 5. 120. 21.
11 MS I. 8 1. 115 10.
12 For होत्रा cp Hir III. 18 348 होत्रा भूर्भुव॰.
13 MS I. 8. 5 121. 1.
14 MS I 6. 10 102. 12.
15 The ms first hand अवाच.
16 MS I. 2. 1 10 3.

प्रातः[1] ॥ ३५ ॥ वर्चो मे यच्छेति[2] सादयति ॥ ३६ ॥ ओषधीभ्यस्त्वेति[3] दर्भेषु लेपं निमार्ष्टि ॥ ३७ ॥ प्रजापते पशून्मे पाहीति गार्हपत्यमवेक्षते ॥ ३८ ॥ पूर्वामसँसक्तां भूयसीं द्वितीयामाहुतिं जुहोति[4]—प्रजापतये स्वाहेति मनसा ॥ ३९ ॥ अनाभो मृड धूर्ते[5] इति त्रिरुदीचीं[6] स्रुचमुद्धरति ॥ ४० ॥ तेन धर्मेणोन्मृज्यावमृज्य वा प्रजां मे यच्छेति सादयति ॥ ४१ ॥ पितॄञ्जिन्वेति दक्षिणतः पृथिव्यां लेपं निमार्ष्टि ॥ ४२ ॥ अपः स्पृष्ट्वा पूषासीति[7] द्विरङ्गुल्या प्राश्नाति ॥ ४३ ॥ न दतो गमयेत्[8] ॥ ४४ ॥ उदग्दण्डया स्रुचान्तर्वेदि भक्षयति गर्भान्प्रीणाति—गर्भेभ्य स्वाहेति ॥ ४५ ॥ निरस्य लेपं परिस्तरणे. स्रुचं प्रक्षाल्योत्करं प्रदार्य पूरयित्वा प्रागुदीचीमुन्निक्षति सर्पान्पिपीलिकाः प्रीणाति—सर्पेभ्य पिपीलिकाभ्यश्च स्वाहेति ॥ ४६ ॥ द्वितीयं पश्चादाहवनीयस्य—पृथिव्याममृतं जुहोमि स्वाहेति ॥ ४७ ॥ स्रुचं निष्टप्य हस्तमयथायोत्तरतो निदधाति सप्तऋषीन्प्रीणाति—सप्तऋषिभ्य स्वाहेति ॥ ४८ ॥ यथाकाम्यपरयोर्होमो ऽग्ने गृहपते परिषद्य जुषस्व स्वाहेत्येकँस्रुवँ विगृह्णाति दक्षिणाग्नौ धामये पुष्टिपतये स्वाहेति प्राजापत्य उत्तरे[11] ॥ ४९ ॥ अन्तर्वेदि प्रक्षालनं निनयति सर्पदेवजनान्प्रीणाति—सर्पदेवजनेभ्यः स्वाहेति ॥ ५० ॥ दीदिहि दीदाय दीदिदाय स्वाहेति पर्यायैः सर्वेषु समिध आधाय तेन धर्मेण पर्युक्षति ॥ ५१ ॥

इति पुनराधेये [ पञ्चमे ऽध्याये ] द्वितीय खण्डम् ॥

पयसा जुहुयात्पशुकामस्य यवाग्वा ग्रामकामस्याज्येन तेजस्कामस्य दध्नेन्द्रियकामस्य तण्डुलैर्बलकामस्य ॥ १ ॥ द्वादशरात्रमाज्येन दध्ना द्वादशरात्रम् ॥ २ ॥ नित्यं पयो यवागुश्च ॥ ३ ॥ पयोऽभावे यवागुरशुष्का ॥ ४ ॥ द्वयोर्गवोः[12] स्थाल्या दोहनेन च दोहयित्वा पशुकामस्य जुहुयात् ॥ ५ ॥ सजूर्जातवेदो दिवा पृथिव्या जुषाणो अस्य हविषो वीहि स्वाहेति[13] जुहुयाद्यत्र रुद्रः पशूनभिमन्येत ॥ ६ ॥ आज्यमग्निहोत्रम् ॥ ७ ॥ यदि नारमेदग्ने दु शीर्ततनो जुषस्व स्वाहेति[14] जुहुयात् ॥ ८ ॥ यदि नारमेद् द्वादशरात्रँ सायँ सायं जुहुयात्[15] ॥ ९ ॥ अनर्हतो राजन्यस्य पर्वस्वग्निहोत्रं जुहुयान्नान्तराले ॥ १० ॥ सायं प्रातरग्नं भक्तस्य ब्राह्मणकुलँ हरेदेन्नु

1 See MS I. 8. 5 121 12-13
2 MS I. 8 4
3 MS I. 2 18 28 3
4 Cp MS I. 8 5 1[...] पूर्वा[...]
माहुतिमुत्तरा होतव्य
5 MS ib 10
6 MS ib 122 1
7 Identical with M[...]
8 The sense is not [...]

9 Se[...] 3-4
10 M[...]
11 Th[...] clear
12 P[...]
13 T[...]
14 S[...] 10
15 [...]
16 [...]
17 [...]

पस्थानं च वाचयेत् ॥ ११ ॥ संततमह्रुतो जुहुयात् ॥ १२ ॥ सायं पत्न्यन्वास्ते न प्रातः ॥ १३ ॥ हिंकृत्य स्त्रियमुपेयात् ॥ १४ ॥ सूर्योढमतिथिं नापरुन्धीत ॥ १५ ॥ न सायमहुते ऽग्निहोत्रे ऽश्नीयान्न प्रातः[1] ॥ १६ ॥ वसन्ता शिशिरे कर्तं दहेत् ॥ १७ ॥

इति पुनराधाने [पञ्चमे ऽध्याये] तृतीयं खण्डम् ॥

अधिश्रिते ऽग्निहोत्रे ममाग्ने वर्चे[2] इति चतसृभिर्वैहवीभिर्हस्ताववनेनिजीत पुरस्तादग्नीषोमीयायां उत्तराश्चतस्रो जपेत् ॥ १ ॥ विधुदसि विद्य मे पाप्मानमित्यप उपस्पृश्य तिष्ठेत् ॥ २ ॥ उन्नीयमाने वाचं यच्छति ॥ ३ ॥ अभ्युदाहृत उपविश्य दशहोत्राभिमृश्योत्तरामाहुतिमुपोत्थायोपप्रयन्तो अध्वरमिति[5] प्रागुदङ्मुखश्चतुर्भिरनुवाकैराहवनीयमुपतिष्ठेत ॥ ४ ॥ अग्नीषोमीयया पूर्वपक्ष ऐन्द्राग्न्यापरपक्षे[10] ॥ ५ ॥ अग्न आयूंषि पवस इति षड्भिराहवनीयं नित्यं संवत्सरे संवत्सरे गार्हपत्यम् ॥ ६ ॥ अग्नेः समिदसीति[12] पर्यायैराहवनीये समिध आदधाति[13] ॥ ७ ॥ चित्रावसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीयेति[14] त्रिर्जपति । प्रातरुपस्थाने चाम्भः स्याम्भो वो भक्षीयेति[14] गृहानुपतिष्ठते ॥ ८ ॥ रेवती रमध्वमित्येन्तराग्नी तिष्ठन्जपति ॥ ९ ॥ संहितासि विश्वरूपेति[15] वत्सामालभते वत्सं वा ॥ १० ॥ उप त्वाग्ने दिवे दिवे इति गार्हपत्यम् । अभ्यस्थां विश्वा इत्याहवनीयम् ॥ ११ ॥ ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति[16] गृहान्पशूनभिवीक्षते ॥ १२ ॥ इडाः स्थेति[17] गामालभते भुवनमसीति[18] वत्सम् ॥ १३ ॥ निम्रदो ऽसीति[19] ब्राह्मणव्याख्यातम् ॥ १४ ॥ प्राची दिगिति[19] पर्यायैर्दिश उपतिष्ठते ॥ १५ ॥ अग्ने गृहपते इति गार्हपत्यं यथा याजमाने ॥ १६ ॥ ज्योतिषे तन्तवे त्विरित्यन्तर्वेद्युपविश्याहवनीये ऽभ्याधाय रथिरसि वृध मे पाप्मानमित्यप उपस्पृशेत् ॥ १७ ॥ प्रातरवनेनैनं प्रातरुपतिष्ठेत[20] ॥ १८ ॥ अपां पते यो ऽपां भागः

1 See MS 1. 6. 10. 103, 3-4
2 From MS I. 8. 7: 126 7.
3 The ms नाय°.
4 Based on MS I. 5. 7 75, 3-4.
5 MS I. 4. 1· 47. 1.
6 Derived from MS I 5. 7· 75. 6.
7 See MS I. 5. 12 81. 12-13.
8 MS I. 5. 1: 65. 6.
9 MS I. 5. 1-4
10 Derived from MS I. 5. 7. 75. 10-12.
11 MS I. 5. 1. 66. 8.
12 MS I. 5. 2 67. 15.
13 See MS I. 5. 8 76. 11 sqq.
14 MS I. 5 2.
15 MS I. 5. 3.
16 MS I. 5. 11: 79. 19 sqq
17 MS I. 5. 4 71. 9.
18 MS I. 5. 11: 80 14.
19 MS ib. 16.
20 The ms प्रातरवनेन first hand, प्रातरवनेनैन second hand. But cp MS I. 5. 7 75 5.
21 Based on MS ib.

प्रातः[1] ॥ ३५ ॥ वर्चो मे यच्छेति[2] सादयति ॥ ३६ ॥ ओषधीभ्यस्त्वेति[3] दर्भेषु लेपं निमार्ष्टि ॥ ३७ ॥ प्रजापते पशून्मे पाहीति गार्हपत्यमवेक्षते ॥ ३८ ॥ पूर्वामसँसक्तां भूयसीं द्वितीयामाहुतिं जुहोति[4]—प्रजापतये स्वाहेति मनसा ॥ ३९ ॥ अनाभो मृड धूर्ते[5] इति त्रिरुदीचीँ[6] स्रुचमुद्धरति ॥ ४० ॥ तेन धर्मेणोन्मृज्यावमृज्य वा प्रजा मे यच्छेति सादयति ॥ ४१ ॥ पितृञ्जिन्वेति दक्षिणतः पृथिव्यां लेपं निमार्ष्टि ॥ ४२ ॥ अपः स्पृष्ट्वा पूषासीति[8] द्विरङ्गुल्या प्राश्नाति ॥ ४३ ॥ न दतो गमयेत्[9] ॥ ४४ ॥ उदग्दण्डया स्रुचान्तर्वेदि भक्षयति गर्भान्प्रीणाति—गर्भेभ्यः स्वाहेति ॥ ४५ ॥ निरस्य लेपं परिस्तरणैः स्रुचं प्रक्षाल्योत्करं प्रदार्य पूरयित्वा प्रागुदीचीमुत्सिञ्चति सर्पानिपपीलिकाः प्रीणाति—सर्पेभ्यः पिपीलिकाभ्यश्च स्वाहेति ॥ ४६ ॥ द्वितीयं पश्चादाहवनीयस्य—पृथिव्याममृतं जुहोमि स्वाहेति ॥ ४७ ॥ स्रुचं निरर्घ्य हस्तमवधायोत्तरतो निदधाति सप्तऋषीन्प्रीणाति—सप्तऋषिभ्यः स्वाहेति ॥ ४८ ॥ यथाकाम्यपरयोर्होमोऽमे गृहपते परिषय जुषस्व स्वाहेत्येकँस्रुवँ विगृह्णाति दक्षिणाग्नौ चाग्नये पुष्टिपतये स्वाहेति प्राजापत्य उत्तरे[11] ॥ ४९ ॥ अन्तर्वेदि प्रक्षालनं निनयति सर्पदेवजनान्प्रीणाति—सर्पदेवजनेभ्यः स्वाहेति ॥ ५० ॥ दीदिहि दीदाय दीदिदाय स्वाहेति पर्यायैः सर्वेषु समिध आधाय तेन धर्मेण पर्युक्षति ॥ ५१ ॥

इति पुनराधेने [ पञ्चमेऽध्याये ] द्वितीयं खण्डम् ॥

पयसा जुहुयात्पशुकामस्य यवाग्वा ग्रामकामस्याज्येन तेजस्कामस्य दध्नेन्द्रियकामस्य तण्डुलैर्बलकामस्य ॥ १ ॥ द्वादशरात्रमाज्येन दध्ना द्वादशरात्रम् ॥ २ ॥ नित्यं पयो यवागुश्च ॥ ३ ॥ पयोऽभावे यवागुरशुष्का ॥ ४ ॥ द्वयोर्गवोः[16] स्थाल्या दोहनेन च दोहयित्वा पशुकामस्य जुहुयात् ॥ ५ ॥ सजूर्जातवेदो दिवा पृथिव्या जुषाणो अस्य हविषो वीहि स्वाहेति[14] जुहुयाद्यत्र रुद्रः पशूनभिमन्येत ॥ ६ ॥ आज्यमग्निहोत्रम् ॥ ७ ॥ यदि नारमेदग्ने दु शीर्ततनो जुषस्व स्वाहेति[15] जुहुयात् ॥ ८ ॥ यदि नारमेद् द्वादशरात्रँ सायँ सायं जुहुयात् ॥ ९ ॥ अनर्हतो राजन्यस्य पर्वस्वग्निहोत्रं जुहुयाद्ग्रामान्तराले ॥ १० ॥ सायं प्रातरग्रं भक्तस्य ब्राह्मणकुलँ हरेदेनु

1 See MS I. 8. 5. 121. 12-13.
2 MS I. 8. 4
3 MS I. 2 18. 28. 3.
4 Cp MS I. 8. 5. 121. 4 अतिहाय पूर्वामाहुतिमुत्तरा होतव्या.
5 MS ib 10.
6 MS ib 122 1.
7 Identical with MS ib 121. 20.
8 The sense is not clear.
9 See MS ib 122. 3-4.
10 MS ib 9.
11 The sutra is not clear.
12 Perhaps to be emended to सर्वदेव॰.
13 The ms पुनराधेये.
14 See MS I. 8. 6. 122 17, 123. 4
15 MS ib 123 1-2.
16 Based on MS ib 7.
17 See MS I. 8 7 127. 2.

विश्वदानीमाभरन्तो[1] ऽनातुरेण मनसा ।
श्रमे मा ते प्रतिवेशा रिषाम ॥

इत्याहवनीयं पशून्मे शंस्याजुगुप्सं इति च । प्रजां मे नर्याजुगुप्सं इति गार्हपत्यमसं म पुष्याजुगुप्सं इति दक्षिणाग्निं सप्रथ. सभा मे ऽजुगुप्सं मे पुनर्देहीति[3] सभ्यमहिर्बुध्न्य मन्त्रं मे ऽजुगुप्सं मे पुनर्देहीत्यावसथ्यम् ॥ ३६ ॥ इमान्मे मित्रावरुणौ गृहानजुगुप्सं[4] युवं-मित्यन्तराग्नी तिष्ठञ्जपति ॥ ३७ ॥

मम च नाम तव च जातवेदो वाससी इव विवसानौ चराव ।
ते विमृतो महसे जीवसे च यथायथं नौ तन्वौ जातवेद ॥

इत्याहवनीयम् ॥ ३८ ॥ नव रात्रीः परार्धाः प्रोष्याहुतिं[5] जुहोति—
विश्वकर्मन्हविषा घृतेन विच्छिन्नं[6] यज्ञं समिमं दधातु ।
*या इष्टा उषसो याश्च याज्यास्ताः[7] संदधामि मनसा घृतेन[8] ॥*

इति ॥ ३९ ॥ नव रात्रीः परार्धा[9] उषित्वा सहगृहः[10] प्रयास्यन्युक्तेषु चक्रावत्सु[11] वास्तोष्पत्यं जुहोति[12] ॥ ४० ॥ न हीनमन्वाहरेयुः[12] ॥ ४१ ॥ अमीवहा वास्तोष्पते[13] ॥ वास्तोष्पते इत्येताभ्यामाहुती[5] हुत्वायं ते योनिर्ऋत्विय[14] इत्यरण्योरग्निं समारोपयति गार्हपत्याहवनीयौ गतश्रियो गार्हपत्यमगतश्रियः ॥ ४२ ॥ दक्षिणाग्निर्यदि मर्थ्यैः समारोपयेत् ॥ ४३ ॥ यद्यरण्योर्नाशमाशङ्केत सचेहि या ते[16] यज्ञिया तनूस्तयेह्यारोहेत्यात्मनि विहारं समारोपयति ॥ ४४ ॥ न सहाग्निर्भूते गृहेभ्यः प्रवसेत् ॥ ४५ ॥ नासंदह्यावक्षाणानि[17] प्रयायात् ॥ ४६ ॥

उपावरोह जातवेदो[18] देवेभ्यो हव्यं वहतु प्रजानन् ।

1 The ms आरभन्ते.

2 MS I, 5 14.

3 In the previous mantras °पुनर्देहि was not added, because of their being pratikas from the Samhitā.

4 The Samhitā (ib 84. 9) गृहान्जुगुप्सं.

5 The ms °हुतीर्.

6 We expect the nominative,

7 The ms याश्ज्या°, thus retaining a trace of the Samhitā accent.

8 Except for the first word the verse is MS I, 7, 1 109, 8.

9 The ms रात्रीष्परार्धा. first hand, रात्रीः परार्धाः second hand.

10 The ms सगृहं.

11 ? Perhaps to be read as चक्रीवत्सु.

12 Cp MS I, 5, 13 82, 8.

13 MS ib 11-14.

14 MS I. 5. 1: 66. 4.

15 The ms मध्य.

16 The ms सस्वेह्याते first hand, सस्वेयाते second hand, Other Śrautasutras also have corrupt readings. See KapKath Samhitā I. 16 12 13 and the note thereon.

17 The ms नासदह्यावक्षाणेति.

18 The ms second hand adds पुनस्त्वं.

स त एप इति प्रागुदञ्चमुदकाञ्जलिमुत्सिच्य प्रतिपिक्ता अरातय इति त्रिः प्रत्युक्षति ॥ १९ ॥ कालाय वामिति पाणी प्रक्षाल्येदमहं दुरद्मन्यां निष्ठावयामीत्याचम्य निष्ठीवति[1] ॥ २० ॥ भ्रातृव्याणाँ सपत्नानामिति पाणी प्रक्षालयते[2] ॥ २१ ॥ इन्द्रियवैतीमयेति यथारूपं गात्राणि संमृशति ॥ २२ ॥ अदो मा मा हासिष्टेति पाणी प्रक्षालयते[3] ॥ २३ ॥ सूर्यपत्नीरित्यभिपिञ्चन्पुरुष्यवानो महिष इति च हुते चतस्रो वैहर्वीरुक्त्वा घर्मो जठरे[4] इत्यनुवाकेनाहवनीयमुपतिष्ठेत ॥ २४ ॥ असौ स्वस्ति ते ऽस्त्वसौ स्वस्ति ते ऽस्त्विति नामग्राहं पुत्रानन्वातयते[5] ॥ २५ ॥ अग्नीन्समाधेहीत्याह प्रवत्स्यन् ॥ २६ ॥ भास्वत उपतिष्ठते। पशून्मे शंस्य पाहीत्याहवनीयं प्रजां मे नर्य पाहीति[6] गार्हपत्यमन्नं मे बुध्य पाहीति[6] दक्षिणाग्निं सप्रथ सभां मे पाहीति सभ्यमहिर्बुध्न्य मन्त्रं मे पाहीत्यावसथ्यम् ॥ २७ ॥ इमान्मे मित्रावरुणौ गृहान्गोपायतं युवमित्यन्तराग्नी तिष्ठञ्जपति ॥ २८ ॥

मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे[8]।
तत्त्वं बिभृहि पुनरा ममैतोस्तवाहमग्ने बिभराणि नाम ॥

इत्याहवनीयम् ॥ २९ ॥

मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः।
मान्तः स्थुर्नो अरातयः ॥
यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः।
तमाहुतं नशीमहि[9] ॥

इति यजति ॥ ३० ॥ सकाशे वाचँ यच्छत्यसकाशे विसृजते ॥ ३१ ॥ यथाकालमग्न्युपस्थानयाजमाने जपेत् ॥ ३२ ॥ प्रोष्य समिध आहरति ॥ ३३ ॥ असकाशे वाचँ यच्छति संकाशे विसृजते ॥ ३४ ॥ अग्नीन्समाधेहीत्याह। प्रोष्य भास्वते उपतिष्ठते ॥ ३५ ॥ अग्नेः समिदसीति[12] पर्यायैः सर्वेषु समिध आधाय

1 ! The ms ॰यामीत्यान्वनिष्ठीवति first hand, ॰मामीति निष्ठीवति second hand. Cp Hir VI, 21: 540.

2 The ms second hand ॰यति.

3 The ms second hand इन्द्रिया॰ (after Āp VI. 20. 2).

4 ! Thus the ms first hand, the second hand corrects after Āp VI. 21. 1 घर्मो जठराद्दम्.

5 Cp I. 1. 4. 28.

6 Against the Samhitā अग्नि (I. 5. 14. 83, 20) So also in sūtra 35.

7 MS I. 5. 14.

8 The ms यदधधुन्वमे first hand, दधतुर्यदग्रे second hand.

9 The ms ॰हुतमसि.

10 The ms यद्यन्यस॰.

11 ! Thus emended. The ms भस्म त्व or भस्म त्वा (= MS I. 5. 14 83 20–84. 1). Cp Hir VI. 22 543 भास्वत(.), and Āp VI. 24. 2 ज्वलत( ).

12 MS I. 5. 2 67. 15.

इति श्यामाकानाम् ।

एतमु त्य मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषुः ।

इन्द्र आसीत्सीरपति शतक्रतु कीनाशा आसन्मरुत सुदानव ॥

इति यवानाम् ॥ ८ ॥ वत्सः प्रथमजो दक्षिणा वत्सः प्रथमजो दक्षिणा ॥ ९ ॥

इति पुनराधाने [ पञ्चमे ऽध्याये ] पञ्चमं खण्डम् ॥

इति पञ्चमो ऽध्यायः ॥

आयुः प्रजाँ रयिमस्मासु धेह्यरिष्टो[1] दीदिहि नो दुरोणे ।
इत्युपावरोह्य मन्थेत् ॥

इति पुनराधाने [पञ्चमे ऽध्याये] चतुर्थं खण्डम् ॥

श्यामाकान्बुभुक्षमाणः पुराणानाँ व्रीहीणामाग्नेयमष्टाकपालं निर्वपे त्सौम्यं च श्यामाकं चरुम् ॥ १ ॥ बभ्रुः पिशङ्गो दक्षिणा वसनँ वा ॥ २ ॥ व्रीहीणामग्रपाकस्य यजते यवानां च ॥ ३ ॥ नानिष्ट्वाग्रायणेन नवस्याश्नीतं ॥ ४ ॥ ऐन्द्राग्नमेकादशकपालं निर्वपेदाग्नेन्द्रँ वा ॥ ५ ॥ वैश्वदेवः पयसि चरुः श्यामाकश्चरुः । न यवाग्रायणे । द्यावापृथिवीय एककपालं इति हवीँषि[3] ॥ ६ ॥ पुरस्तात्स्विष्टकृतो ऽज्यानीर्जुहोति[4]—

शतायुधाय शतवीर्याय शतोतये ऽभिमातिषाहे ।
शतँ यो नः शरदो ऽनयदिन्द्रो [ विश्वस्य ] दुरितस्य पारँ स्वाहा ॥
ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ।
तेषामज्यानीं[5] यतमो न आवहत्तस्मै नो देवाः परिदत्त सर्वे स्वाहा ॥
वसन्तो ग्रीष्मो मधुमन्ति वर्षाः शरद्धेमन्तः सुविते दधात नः ।
तेषाँ वयँ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम स्वाहा ॥
स्वस्ति सँवत्सराय परिवत्सरायेदावत्सरायोद्वत्सराय कृणुता बृहन्नमः ।
तेषाँ वयँ सुमतौ यज्ञियानां निवात एपामभये स्याम स्वाहा ॥
इयँ स्वस्ति सँवत्सरीया परिवत्सरीयेदावत्सरीयोद्वत्सरीया ।
सा नः पिपर्त्वेहृणीयमानेनाहेदहारम(?)शीय स्वाहा ॥[5]
इति । आ नः प्रजां जनयत्विति[6] षष्ठी ॥ ७ ॥ इडां भक्षयति—
भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा ।
स नो मयोभूः पितुराविवेश शिवस्तोकाय तन्वो न एधि ॥
इति व्रीहीणाम् ।
अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥

1 The ms ॰रिष्टा first hand, धेह्यजस्रो second hand, Cp ŚānkhŚr II. 17. 8.
2 Based on KS XII. 7. 169. 21-22.
3 The sense is not clear. The ms द्यावापृथिवीय द्यावापृथिवीय एकादशकपाल first hand, द्यावापृथिव्यं यद्यावापृथिवीय एकादशकपाल second hand.
4 Cp Mān I. 6. 4 21 पञ्चाज्याहुतीर्जुहो॰
5 In these verses the ms second hand has made certain changes after the Taittiriyas. For the text above see KS XIII. 15. 197. 20 sqq. Mls ib.
6 MS II. 13 23 169. 4.

पर्यायैर्दिक्षु शम्यां निधायानुशम्यमश्रया व्यवलिखति ॥ १९ ॥ जानुदघ्नं[2] चतुरश्रं खात्वोत्तरवेद्ये[3] पाँसून्हरति ॥ २० ॥ विदेरग्ने इति खनति ॥ २१ ॥ अग्ने अङ्गिर इत्यवदायं वसवस्त्वा हरन्त्विति हरति ॥ २२ ॥ वित्त्य यज्ञपतेरिति[4] पश्चाद्यूपावटस्य निवपति ॥ २३ ॥ एतेन धर्मेणोत्तराभ्यां पर्यायाभ्यां त्रिर्यजुषा हरति तूष्णीं चतुर्थम् ॥ २४ ॥ समानः खननो निवपनश्च ॥ २५ ॥ देवेभ्य प्रथस्वेत्युत्तरवेदिं प्रथयति[6] ॥ २६ ॥ देवेभ्य कल्पयस्वेति कल्पयति[6] ॥ २७ ॥ चतुरश्रामुत्तरवेद्यां प्रादेशमात्रीं नाभिं कृत्वा सिँहीरसि महिषीरसीत्यभिमन्त्र्य देवेभ्यः शुन्धस्वेत्युत्तरवेदिं प्रोक्षति ॥ २८ ॥ देवेभ्य शुम्भस्वेति[6] सिकताभिः प्ररोचयति ॥ २९ ॥ अद्भिर्निःसारयति संततामुदकधारां स्रावयन्स्फ्येन वर्त्म कृत्वा समयोत्तरावसायांपो रिप्रं निर्वहतेति ॥ ३० ॥ प्रोक्षणीः सँस्कृत्योत्तरवेदिं प्रोक्षति—इन्द्रघोषास्त्वेति[7] पर्यायैरनुपरिक्रामन् ॥ ३१ ॥ पितृणा भागधेयी स्थेति दक्षिणत उत्तरवेद्याः प्रोक्षणीशेषं निनीय पञ्चगृहीतेनाज्येनोत्तरवेदिँ[8] व्याघारयति हिरण्यं निधाय—सिँहीरसि सपत्नसाही स्वाहेति[4] पर्यायैरक्ष्णया श्रोणयँसेषु ॥ ३२ ॥ मध्ये पञ्चमेन ॥ ३३ ॥ भूतेभ्यस्त्वेति[4] त्रिरुदीचीँ[2] स्रुचमुद्दिशति ॥ ३४ ॥ नाभ्यां पौतुद्रवान्परिधीन्परिदधाति प्रादेशमात्रान्—विश्वायुरसीति[4] पर्यायैः ॥ ३५ ॥ अवेरनाच्छिन्नस्तुकस्यान्तरा श्लक्ष्णादूर्णास्तुकां केरुगुल्गुलिनिति[9] नाभ्याँ संभारान्निवपति ॥ ३६ ॥ अग्नेर्भस्मासीति[4] पर्यायैर्विभ्राड् बृहदित्यन्तादनुवाकस्योत्तरवेदिमभिमृश्याहवनीयादग्निं प्रणयति ॥ ३७ ॥

इति पशुषु [ षष्ठे ऽध्याये ] प्रथमं खण्डम् ॥

यस्ते पावक चक्रमा कश्चिदाग पूर्वो यः सप्तपरो भवति ।
घृतेनाग्ने तन्वं वर्धयस्व मा मा हिँसीरधिगतं पुरस्तात् ॥

इत्युक्ते ऽग्नावाहवनीये जुहोति ॥ १ ॥ अग्नये प्रणीयमानायानुब्रूहीति संप्रेष्यति ॥ २ ॥ उपयच्छत्युपयमनीः ॥ ३ ॥ ऊर्ध्वं वन्तमिरेत्युच्यमाने

यज्ञ प्रयच्छात्सुमति सुमेधा आ त्वा वसूनि पुरोधार्हन्ति ।
दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्धि[10] ॥

1 The ms •मश्राम्यव• first hand, •मक्ष्या श्रव• second hand.

2 MS III 8, 5 100 3.

3 Instead of •वेद्या.

4 MS I. 2, 8.

5 We expect इत्यवदाय, Cp Hir IV 3 402 पाँसूनादत्ते.

6 See KS XXV, 6 109, 16

7 ! Cp Mān I 7, 3, 24, Āp VII, 4, 5.

8 The ms अवेद•.

9 ! The ms second hand केरुंगुलन्निति.

10 MS IV, 10 4 152, 4

11 The ms second hand follows in its variations the Taittirīyas.

उदगयनस्याद्यन्तयोरैन्द्राग्नेन पशुना यजेत संँवत्सरे संँवत्सरे वा ॥ १ ॥ षड्ढोत्रा मनसा जुहोति—वाग्घोता दीक्षा पत्न्यापो ऽध्वर्युर्वातो ऽभिगर प्राणो हविर्मनो ब्रह्मा तपसि जुहोमि स्वाहेति ॥ २ ॥[1] प्रहेत्रे द्वितीयाम्—वाचस्पते ऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवावृधं होत्रामेरयँ स्वाहेति ॥ ३ ॥[2] आग्नावैष्णवमेकादशकपालं निर्वपति वैष्णवीँ वा पूर्णाहुतिम् ॥ ४ ॥ उरु विष्णो विक्रमस्वेति[3] वैष्णव्या हुत्वा यूपमच्छैति[4] बिल्वपलाशखदिररोहितकोदुम्बराणामेकम् ॥ ५ ॥ बैल्वं ब्रह्मवर्चसकामः[5] कुर्वीत ॥ ६ ॥ पञ्चारत्न्यादिप्रमाणमनधिशाख्यमृजुमूर्ध्वशल्कमुपरिष्टादुपावनतं[6] बहुपलाशशाखमप्रतिशुष्काग्रं प्राञ्चं प्रत्यञ्चं वाह्वानम् ॥ ७ ॥ अत्यन्यानगामित्यभिमन्त्र्य विष्णवे त्वेत्याज्येन पर्यनक्ति[7] ॥ ८ ॥ ओषधे त्रायस्वैनमिति[8] दर्भमन्तर्दधाति ॥ ९ ॥ स्वधिते मैनँ हिँसीरिति[9] परशुना प्रहरति ॥ १० ॥ प्रथमशल्कमुपयम्य भूमिसमँ वृश्चति ॥ ११ ॥ यं त्वामयँ स्वधितिरिति[10] प्राञ्चं प्रह्वापयति[11] ॥ १२ ॥ वनस्पते शतवल्शो विरोहेत्यावश्चने जुहोति ॥ १३ ॥ सहस्रवल्शा इत्यात्मानं प्रत्यभिमृशति ॥ १४ ॥ अष्टाश्रिं तक्षति गोपुच्छमतष्टमूलम् ॥ १५ ॥ अग्रतो ऽश्रिष्ठां पृष्ठतः सूर्यस्याम् ॥ १६ ॥ अग्रस्य चषालं पृथमात्रमष्टाश्रि मध्ये संगृहीतम् ॥ १७ ॥ इध्माबर्हिः संनह्य वेदं कृत्वा रथमात्रीँ वेदिं करोति शम्यामात्रीमुत्तरवेदिम् ॥ १८ ॥ यत्प्रागुत्तरस्मात्परिग्राहात्तत्कृत्वा सावित्रेणाभ्रिमादायाभ्रिरसि नारिरसीत्यभिमन्त्र्योत्तरत उत्तरवेद्यन्तात्प्रक्रममात्रे चात्वालं परिलिखति—तप्तायनी मे ऽसीति[12]

1 ! The ms प्रहेति first hand, समहं जुहोति second hand.

2 MS I, 2, 13 22 8.

3 Cp TS VI, 3, 3, 1 वैष्णव्यर्चा हुत्वा यूपमच्छैति.

4 Based on MS III 9, 3 116, 14

5 See MS III, 9 2 115, 2 sqq

6 Ib 114, 14–15.

7 MS I 2, 14

8 From MS III, 9 2 114, 12.

9 The ms प्रातर्यतीति. See MS III, 9, 3 116, 1.

10 ! The ms यत्प्रागुत्तरेस्यस्य परिग्र देभ्यरत-स्कृत्वा.

11 MS I, 2, 10- 19, 15

12 MS I, [illegible] 17 8.

यूपं प्रोक्षति—पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् । शुन्धन्तां लोकाः इति यूपावटम् ॥ १ ॥ यवो ऽसीति यवानवदधाति ॥ २ ॥ पितृषदनं त्वेति दर्भैरवस्तृणाति ॥ ३ ॥ स्वावेशो ऽसीति प्रथमशल्कमवधाय घृतेन द्यावापृथिवी इति स्रुवेणाभिजुहोति ॥ ४ ॥ पुरस्तात्प्रत्यञ्चं यजमानो यूपमनक्ति ॥ ५ ॥ यूपायाज्यमानायानुब्रूहीति संप्रेष्यति ॥ ६ ॥ आन्तमविच्छिन्नमनक्ति ॥ ७ ॥ देवस्त्वा सविता मध्वानक्त्विति यूपाग्रमनक्ति । सर्वं सहचषालमनक्ति—इन्द्रस्य चषालमसीति ॥ ८ ॥ चषालं प्रतिमुच्य सुपिप्पला ओषधीरित्यङ्गुलिमात्रमूर्ध्वं चषालाद्यूपाग्रं कनीयो वा ॥ ९ ॥ यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यति ॥ १० ॥ दिवमग्रेणोत्तमानेत्युच्छ्रयति ॥ ११ ॥ ता ते धामानीत्यवदधाति ॥ १२ ॥ विष्णोः कर्माणीत्यवस्थापयत्याग्निमभिमुखीमग्निष्ठाम् ॥ १३ ॥ न तष्टस्य निखनति ॥ १४ ॥ नातष्टस्यावटः करोति ॥ १५ ॥ ब्रह्मवनिं त्वेति पांसुभिः परिवपति ॥ १६ ॥ ब्रह्म दृंह क्षत्रं दृंहेति यजमानो मैत्रावरुणदण्डेन परिदृंहयति ॥ १७ ॥ प्रोक्षणीशेषेण परिषिच्य तद्विष्णोरिति स्वरुरशनेन समुन्मार्ष्टि ॥ १८ ॥ दिवीव चक्षुराततमिति संमितमभिमन्त्रयते ॥ १९ ॥ त्रिवृता यूपं परिव्ययत्यग्रतो रशनायास्त्रिः परिहरणाय यूपायावधिप्य शेषं ग्रैधं संभुज्योत्तरतः सूर्यस्थाया नाभिमात्रे संभोगं प्रतिष्ठाप्य यूपाय परिवीयमाणायानुब्रूहीति संप्रेष्यति ॥ २० ॥ परिवीरसीति त्रिः परिव्ययत्युत्तरमुत्तरं प्रदक्षिणं संभोगे रशनाग्रमतिहृत्य मूलतो निरायम्यान्तात्प्रवेष्टयति ॥ २१ ॥ अणीयसीं स्थवीयस्युपकर्षति ॥ २२ ॥ यदि कामयेत वर्षेत् पर्जन्य इति ॥ २३ ॥ अञ्जनादि यजमानो यूपं नापरिवीतमवसृजति ॥ २४ ॥ दिवः सानूपेत्युत्तमे रशनगुणे स्वरुमुपगृह्याजमुपाकरोति श्वेतं लोहितं द्विरूपं वा श्मश्रुलम् ॥ २५ ॥ कूटाकर्णकाणखण्डखण्डापन्नदन्ता इति प्रतिषिद्धाः ॥ २६ ॥ उत्तरतो यूपस्य प्रत्यञ्चं पशुमवस्थाप्याहुती जुहोति ॥ २७ ॥

इति पशुषु [ षष्ठे ऽध्याये ] तृतीयं खण्डम् ॥

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।

1 MS I. 2, 11.

2 MS I. 2 14

3 Here the ms adds यजमानो मैत्रावरुणदंडं परिदृंहति.

4 Cp MS III. 9 4 119. 6, Mān I. 8. 1, 17, Āp VII. 3 6.

5 Cp MS ib 118. 6, Āp VII. 10. 12.

6 We expect here इति मानस्प्यासुन्तानाम् (MS III. 9. 4: 118. 14)

7 The ms अंजनादीन्. Cp Āp VII. 10, 5.

8 Based on KS XXVI. 6: 128. 15.

9 Thus the ms second hand. The first hand °ऋणाकाणखंडखंडापन्नदन्त. Cp MS III. 9. 3. 122. 4.

10 The ms °हुतीर्.

इति संभारेष्वध्वर्युरग्निँ सादयति ॥ ४ ॥ यस्मादधि प्रणयति तस्मिन्गार्हपत्यकर्माणि कुर्वीताग्निहोत्रं च जुहुयादौत्तरवेदिके ॥ ५ ॥ वरुणप्रघासेष्वग्निहोत्रं प्रणयनी पूर्णाहुतिरिति यथाग्न्याधेये[1] ॥ ६ ॥ अतिमुक्तीर्जुहोति—

अग्निर्यज्ञं नयतु प्रजानन्मैनँ यज्ञहनो विदन् ।
देवेभ्यो यज्ञं नयतात्प्र प्र यज्ञपतिं तिर स्वाहा ॥

इति । वायु सूर्यो यज्ञं नयत्विति समानम् ॥ ७ ॥ प्रणीते ऽन्यन्वाधानँव्रतोपोयनम्[2] ॥ ८ ॥ पाणिप्रक्षालनप्रभृति समानमा पात्रप्रयोगात् ॥ ९ ॥ एकादशकपालः पुरोडाशो द्वादशकपालो वा ॥ १० ॥ द्वे जुहू वसाहोमहवनी द्वितीया । द्वे उपभृतौ पृषदाज्यधानी द्वितीया । द्वे आज्यस्थाल्यौ । यूपशल्कम् । शूलम् । पशुश्राम्[3] । कार्ष्मर्यमय्यौ वपाश्रपण्यौ । द्विशृङ्ग्येकशृङ्गे । औदुम्बरमास्यदघ्नं मैत्रावरुणदण्डम् । दर्भाणाँ रशने द्विगुणां द्विव्यायामां त्रिगुणां त्रिव्यायामाँ[4] सँसाद्य प्रोक्ष्य पात्राण्याज्यं निर्वपति दधि च ॥ ११ ॥ पृषदाज्यधर्मैर्दधि सँस्करोत्युपभृद्धर्मैः[5] पृषदाज्यधानीं पात्राणि च पात्रधर्मैः द्वितीयानि ॥ १२ ॥ स्फ्यप्रक्षालनप्रभृति समानमाज्यग्रहेभ्यः[6] ॥ १३ ॥ चतुरुपभृति गृहीत्वा पञ्चगृहीतं पृषदाज्यधान्यामाज्येन संनीय महीनां पयो ऽसि विश्वेषां देवानां तनूरसि । ऋध्यासमद्य पृषतीनां ग्रहम् । पृषतीनां ग्रहो ऽसि विष्णोर्हृदयमसीति पर्यायैः[7] ॥ १४ ॥ सन्नेष्वाज्येषु यूपावटं परिलिखति—इदमहँ रक्षसो ग्रीवा अपिकृन्तामीति[8] पूर्वस्य वेद्यन्तस्य मध्ये ऽर्धमन्तर्वेद्यर्धं बहिर्वेदि ॥ १५ ॥ उत्तरतश्चत्वालस्य शामित्रलक्षणमुद्धन्ति ॥ १६ ॥

इति पशुषु [षष्ठे ऽध्याये] द्वितीयं खण्डम् ॥

यत्ते शोचिः परावधीत्तक्षा हस्तेन वास्या ।
आपस्तत्पावकाः शुन्धन्तु शुचयः शुचिर्मे[9] ॥

इति स्नातँ यूपं तीर्थेनोपसाद्य तूष्णीकाँ[10] यवमतीः प्रोक्षणीः सँस्कृत्य

1 The sense of the passage is not clear.

2 The ms प्रणीतेऽग्निन्वाधानव्रतोपा॰ first hand, प्रणीते ऽग्नीन्परिस्तीर्याधानव्रतोपा॰ second hand.

3 1 The ms पशुश्रपिसाम् first hand, प्रक्षशाराम् second hand.

4 In this sūtra the nominatives are mixed up with accusatives. The ms second hand corrects all the nominatives into accusatives.

5 The ms सँस्कृत्यादुप॰ first hand, संस्कुर्यादुप॰ second hand.

6 The ms समानमाज्यधर्मैग्रहेभ्य .

7 The sentence is not complete.

8 MS I. 2. 10. 19. 15.

9 The ms second hand after Āp VII. 9. 9.

10 Thus also I. 1. 1. 27.

चात्वालँ पशुमाहवनीयँ यूपमाज्यानीत्याग्नीध्रस्त्रिः पर्यग्नि[1] कृत्वाहवनीय उल्मुकमवसृज्य त्रिः प्रतिपर्येति[2] ॥ २५ ॥ ये वध्यमानमिति[3] पशुप्रमोचनीया जुहोति ॥ २६ ॥ रेवतीति[2] वपाश्रपणीभ्यां पशुमन्वारभते यजमानश्च ॥ २७ ॥ तदेवोल्मुकमुपर्यस्याग्नीध्रो ऽग्रतः प्रतिपद्येत ॥ २८ ॥ अन्वारभ्याश्रावयति ॥ २९ ॥ उल्मुकपाणिराग्नीध्रः प्रत्याश्रावयति—उपप्रेष्य होतर्हव्या देवेभ्य इति संप्रेष्यति ॥ ३० ॥ उरो अन्तरिक्षेत्यग्निमुपास्तीर्थेनोदञ्चो व्रजन्ति ॥ ३१ ॥ शामित्रलक्षणे ऽग्निँ सादयति ॥ ३२ ॥ तस्मिन्पशुँ श्रपयति ॥ ३३ ॥ पश्चाच्छामित्रस्य याभ्यां दर्भाभ्यां पशुमुपाकरोति तयोरन्यतरमधस्तादुपास्यति—समस्य तन्वा भवेति[2] ॥ ३४ ॥ वर्षीयो वर्षीयसे इति यजमानो जपति ॥ ३५ ॥

इति पशुषु [ षष्ठे ऽध्याये ] चतुर्थं खण्डम् ॥

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभि सह देवयान. ।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥

इति पर्यावृत्येहे[4] प्रजा विश्वरूपा रमन्तामिति[5] पृषदाज्यमवेक्षते यजमानश्च ॥ १ ॥ प्रत्यक्शिरसमुदीचीनपादं संज्ञपयन्ति ॥ २ ॥ स्वर्विदसीति[6] यजमानः संज्ञप्यमानमनुमन्त्रयते ॥ ३ ॥ न वा एतन्म्रियसे इत्यध्वर्युः ॥ ४ ॥

यत्पशुर्मायुमकृतोरो वा पद्भिराहते[7] ।
अग्निर्मा[8] तस्मादेनसो विश्वान्मुञ्चत्वँहस. ॥

इति संज्ञप्ते जुहोति ॥ ५ ॥ शमितार उपेतनेति[2] संप्रेष्यति ॥ ६ ॥ पश्चात्पशुमिति[2] पाशेषु प्रमुच्यमानेषु जपति ॥ ७ ॥ एकश्लक्ष्णया पाशाँश्चात्वाले ऽनुप्रहरति ॥ ८ ॥ यो नो द्वेष्यधर स पद्यतामिति[2] यद्यभिचरेत् ॥ ९ ॥ स्तम्बँ[9] स्थाणुँ वापिदध्यात्—

शतेन पाशैर्वरुणाभिधेहि मा ते मोच्यनृतवाङ् नृचक्ष ।
आस्तां जाल्म उदरँ[10] स्रँसयित्वा कोश इवाबन्ध्र.[11] परिकृत्यमान. ॥

इति ॥ १० ॥ नमस्त आतानेति[12] पत्न्यादित्यमुपतिष्ठते ॥ ११ ॥ अनर्वा प्रेहीत्येनामभ्युदानयते ॥ १२ ॥ देवीरापे इत्यध्यधि चात्वाले पत्न्यपो ऽवमर्शयति[13]

1 The ms first hand पर्यग्निं.
2 MS I 2, 15.
3 The ms ०ल्मुक उप०.
4 MS IV, 13 4 203, 6.
5 The ms पर्यवृत्तेह.
6 MS IV, 2 10 32 14.
7 The ms पद्भिरा० first hand, पद्भिरा० second hand
8 The second hand अग्निर्नस्.
9 The ms स्थवं first hand, स्तम्बं second hand.
10 The ms first hand जीप्त्युदरँ.
11 The ms first hand कोशेवाध.
12 MS I, 2 16
13 ! The ms ऽघमर्शयति first hand, ऽवमृशति second hand.

ता अस्मै प्रतिवेदय चिकित्वमनुमन्यताम् ॥

इमं पशुं पशुपते ते ऽद्य बध्नाम्यग्ने सलिलस्यै मध्ये ।

अनुमन्यस्व सुयजा यजेह जुष्टं देवेभ्य इदमस्तु हव्यम् ॥

इति ॥ १ ॥ इषे त्वेति दर्भावादत्ते ॥ २ ॥ उपावीरसीति सप्तशाखाँ हरिणीं पलाशवतीम् ॥ ३ ॥ तया दर्भाभ्यां च पशुमुपाकरोति—उपो देवानिति ॥ ४ ॥ प्रत्यञ्चं पशुमनुमार्ष्टि—अमुष्मै त्वा जुष्टमिति यथादेवतम् ॥ ५ ॥ अभिधानप्रोक्षणवपोत्स्वेदनाभिधारणेषु ॥ ६ ॥ पश्चान्मध्यमस्य परिधेरधिमन्थनँ शकलं प्रयुनक्ति—अग्नेर्जनित्रमसीति वृषणौ स्थै इत्यप्रच्छिन्नप्रान्तौ दर्भौ ॥ ७ ॥ तयोरध्युर्वश्यसीत्युदक्कूलां प्रत्यक्प्रजननामधरारणिम् ॥ ८ ॥ आयुरसीत्याज्यस्थाल्यामुत्तरारणिमनक्ति संपादयति च ॥ ९ ॥ पुरूरवा असीत्यभिमन्त्र्य गायत्रमसीति पर्यायैस्त्रिरभिमथ्याग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति ॥ १० ॥ अग्नये जातायेति जाते ॥ ११ ॥ अग्नये प्रह्रियमाणायेति प्रहरिष्यन् ॥ १२ ॥ अग्रेणोत्तरं परिधिमुत्तरेण वा परिधिसंधिनान्ववहृत्यै भवतं न समनसावित्यनुप्रहृत्याग्ना अग्निरिति स्रुवेणाभिजुहोति ॥ १३ ॥ सावित्रेण रशनामादाय बाहुं पशोर्मध्यपाशेनै परिहृत्य दक्षिणार्धशिरो ऽक्ष्णया पाशेनाभिदधाति—ऋतस्य त्वा देवहविरिति ॥ १४ ॥ धर्षा मानुषो इति यूपे नियुनक्ति ॥ १५ ॥ प्रोक्षणीः संस्कृत्य पशुं प्रोक्षति—अद्भ्यस्त्वौषधीभ्यै इति ॥ १६ ॥ अनु त्वा माता मन्यतामित्यभिमन्त्र्यापां पेरुरसीति पाययति ॥ १७ ॥ स्वात्तँ सद्धविरिति शेषेण सर्वत उपोक्ष्य संमृश्याज्यानि वेद्यन्तान्परिस्तीर्य होतृषदनानास्तीर्याग्नये'' समिध्यमानायानुब्रूहीति संप्रेष्यति ॥ १८ ॥ स्रौचमाघार्य ध्रुवाँ समज्य पशुँ समनक्ति—स ते वायुरिति प्राणदेशँ सँ यजत्रैरङ्गानीति ककुद्देशँ स यज्ञपतिराशिषेति भसद्देशम् ॥ १९ ॥ प्रयाजेषु समिद्भ्यः प्रेष्येति प्रथमे संप्रेष्यति प्रेष्य प्रेष्येत्युत्तरान् ॥ २० ॥ चतुर्थे चतुर्थे समानयति ॥ २१ ॥ दशभिः प्रचर्य स्वरुँ स्वधितिधारां च जुह्वामक्त्वा स्वरुणा स्वधितिमन्तर्धाय पशोरन्तराशृङ्गमनक्ति—घृतेनाक्तौ पशूँस्त्रायेथामिति ॥ २२ ॥ आयतने स्रुचौ सादयति ॥ २३ ॥ आहवनीयादुल्मुकमुपयम्य पर्यग्नये क्रियमाणायानुब्रूहीति संप्रेष्यति ॥ २४ ॥ शामित्रं

1 The ms second hand चिकित्वान॰

2 The ms second hand सुकृतस्य.

3 The ms second hand यजे हि This and the preceding variants agree with Man I 8 3 1

4 MS I 2 15

5 MS I 2. 7

6 The ms ॰स्थाल्या उ॰.

7 The alternative is based on KS XXVI 7 131 12

8 † The ms first hand ॰मेधापाशन

9 The ms second hand दक्षिणार्ध्यशिरो

10 The ms पाशेनापिद॰

11 The ms adds देवेभ्य

घृतेनाग्ने तन्वं वर्धयस्वं सत्या सन्तु यजमानस्य कामा ॥

इति वपां हुत्वा स्वाहोर्ध्वनभसमिति[1] व्यत्यस्ते वपाश्रपण्यावनुप्रहराति प्राचीमेकश्टङ्गां प्रतीचीं द्विश्टङ्गाम् ॥ ११ ॥ संपातेनाभिहुत्यायतने स्रुचौ सादयति ॥ १२ ॥ चात्वाले आपोहिष्ठीयेन त्र्यृचेन मार्जयन्ते सहयजमानपत्नीकाः[2] ॥ १३ ॥ अत्रैव मधुमन्थानां काल· ॥ १४ ॥ मुष्टिना शमिता वपोद्धरणमभिधायास्त आ वपाया होमात् ॥ १५ ॥ उखायां पशुं श्रपयति शूले हृदयम् ॥ १६ ॥ न गुदं निर्लेपयेन्न वनिष्ठुम् ॥ १७ ॥ मेदो मूत उपनह्यति ॥ १८ ॥ ऊवध्यगोहं खात्वोवध्यं गूहति[5] ॥ १९ ॥ व्रीहीणां पशुना समानदेवतं पशुपुरोडाशं श्रपयति ॥ २० ॥ [ श्टते ] पशौ पशुपुरोडाशेन प्रचरति ॥ २१ ॥ इन्द्राग्निभ्या पुरोडाशस्यानुब्रूहि[6] । इन्द्राग्निभ्या पुरोडाशस्य प्रेष्येति संप्रेष्यति ॥ २२ ॥ अग्नये ऽनुब्रूहीति । अग्नये प्रेष्येति स्विष्टकृते ॥ २३ ॥ इडान्तं कृत्वा पृषदाज्यस्य स्रुवेणोपहत्य परैति[7] ॥ २४ ॥ श्टतं हवि शमिता[8] इति पृच्छति ॥ २५ ॥ श्टतमिति[9] शमिता प्रत्याह ॥ २६ ॥ समयाध्वे द्वितीयम् । प्राप्य तृतीयम् ॥ २७ ॥ उत्तरतो ऽवस्थार्यं हृदयमवधाय जुष्ट देवेभ्य[10] इत्यभिघार्य विवाजिनं कृत्वान्तरा यूपाहवनीयावतिहृत्य दक्षिणतः पञ्चहोत्रोपसादयति ॥ २८ ॥ जुहूपभृतोर्वसाहोमहवन्यां समवत्तधान्यामित्युपस्तीर्य सतशाखायां हृदयमवधायाकयाव[च]न्मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति संप्रेष्यति ॥ २९ ॥

इति पशुषु [ षष्ठे ऽध्याये ] षष्ठ खण्डम् ॥

हृदयस्य जिह्वाया· क्रोडस्य सव्यस्यै कपिललाटस्य पार्श्वयोर्यक्नो घृक्कयोर्दक्षिणस्याः श्रोण्याः[11] गुदतृतीयमिति द्विर्द्विरपदाय जुह्वामवद्यति ॥ १ ॥ त्रिधा गुदं विच्छिद्यास्याणीयसो देवताभ्यो ऽवद्यति ॥ २ ॥ स्थविष्ठगुदस्योपयड्भ्यो निदधाति ॥ ३ ॥ दक्षिणस्य कपिललाटस्य पूर्वार्धान्मध्यमं गुदतृतीयं सव्यायाः श्रोण्या जघनार्धात्सकृत्सकृदुपभृति स्विष्टकृते ॥ ४ ॥ यूपे मेदः परिस्राव्य मैधं

1 The ms second hand घृतस्याग्ने तन्वा समव
2 MS III 10 1 131 2
3 The ms चात्वालम्,
4 The ms second hand ॰पत्नी.
5 1 The ms ऊवध्यगोह स स्वोवध्य शुपति first hand, ऊवध्य गर्ते प्रविध्यति । अवदानानि श्रपयति second hand
6 The ms second hand adds इति
7 Derived from MS III 10 2 132 3
8 MS ib 4
9 Ib 6,
10 The ms second hand ॰स्थाप्य, but cp Mān 1, 8 5 13,
11 MS I 2 27 17, 2
12 The ms मध्यस्य,
13 The ms second hand श्रोणे .

॥ १३ ॥ ताभ्यः[1] पत्नी पशोः प्राणान्प्रक्षालयत्यध्वर्युर्वा ॥ १४ ॥ अन्यतरो ऽभिषिञ्चेत् ॥ १५ ॥ वाचमस्य मा हिँसीरिति[2] यथारूपं गात्राणि संमृशति। यत्ते क्रूरँ यदास्थितमिति[2] पूर्वश्चानुषजेत् ॥ १६ ॥ गात्राण्यस्य मा हिँसीरिति[2] ग्रीवा. पृष्ठदेशे शमद्भ्य इति शेषेण सर्वतः ॥ १७ ॥ उत्तानं पर्यावृत्योपाकरणं दर्भमन्त र्दधाति ॥ १८ ॥ ओषधे त्रायस्वैनमिति[2] दर्भमन्तर्दधाति ॥ १९ ॥ स्वधिते मैनँ हिँसीरित्यनक्ततः[4] स्वधितिना तिर्यगाछ्यति ॥ २० ॥ उपयच्छति तृणाग्रम् ॥ २१ ॥ लोहिताक्तं प्रत्यग्दक्षिणा निरस्यति—पृथिव्यै त्वा रक्षसां भागो ऽसीति[2] ॥ २२ ॥ इदमहँ रक्षो ऽवबाध इदमहँ रक्षो ऽधम तमो नयामीति[2] पाष्ण्या तृणमववाधते ॥ २३ ॥ अपः स्पृष्ट्वेषे त्वेति[2] वपामुत्खिदति ॥ २४ ॥ ऊर्जे त्वेति[2] तन्निष्ठ एकशृङ्गायोप तृणत्ति[5] ॥ २५ ॥ देवेभ्यः शुन्धस्वेति[2] वपां प्रक्षालयति ॥ २६ ॥ देवेभ्य शुम्भस्वेति[2] लोहितं प्रत्यूहति ॥ २७ ॥ घृतेन द्यावापृथिवी[2] इति द्विशृङ्गां प्रच्छाद्योत्कृत्य नम सूर्यस्य सदृश[2] इत्यादित्यमुपस्थायोर्वन्तरिक्षँ वीहीति[2] व्रजति ॥ २८ ॥ प्रत्युष्टँ रक्ष इति शामित्रे वपां प्रत्योषति[7] ॥ २९ ॥

इति पशुषु [ षष्ठे ऽध्याये ] षष्ठम् खण्डम् ॥

त्वामु ते दधिरे देवयन्तो हव्यवाहँ श्रृतं कर्तारमुत यज्ञियं च।
अग्नि सुदक्ष सुतनुर्ह भूत्वा देवेभ्यो हव्या वह जातवेद ॥

इति स्रुवेणाभिघार्य स्तोकेभ्यो ऽनुब्रूहीति संप्रेष्यति ॥ १ ॥ श्येनी[8] श्रृतां वर्हिष्यासादयति—सुपिप्पला ओषधीस्कृधीति[8] ॥ २ ॥ वपाश्रपण्यौ विप्रमुच्योत्तमेन प्रयाजेन प्रचरति ॥ ३ ॥ स्वाहाकृतिभ्य प्रेष्येति संप्रेष्यति ॥ ४ ॥ हुत्वा ध्रुवां पृषदाज्यं वपामित्यभिघारयति ॥ ५ ॥ यथाकाम्याज्यभागयोर्होमः[9] ॥ ६ ॥ सर्वहुतं वपां जुहोति ॥ ७ ॥ अभितो वपां हिरण्यशकलाववद्याति ॥ ८ ॥ स्वाहा देवेभ्य[10] इति पुरस्ताद्वपाया. स्रुवेण जुहोति विश्वेभ्यो देवेभ्य स्वाहेत्युपरिष्टात् ॥ ९ ॥ इन्द्राग्निभ्या छागस्य वपाया मेदसो ऽनुब्रूहि[11]। इन्द्राग्निभ्या छागस्य वपाया मेदस प्रेष्येति संप्रेष्यति ॥ १० ॥

जातवेदो वपया गच्छ देवाँस्त्वँ हि होता प्रथमो बभूव।

1 We would expect ताभि.
2 MS I 2 16
3 To be emended to पर्यावर्त्योपा° ?
4 "With the unanointed side (of the svadhiti)'?
5 The ms first hand तन्निष्टत्येकश्रृग्येति यद्
6 The ms °त्कृत्त first hand, °कृत second hand
7 ? The ms प्रत्युपति first hand, निष्टपति second hand.
8 MS I 2, 2 11 7
9 The ms °होमे.
10 MS III, 10 1 130, 17
11 The ms second hand adds इति

समिष्टयजूंषि जुहोति ॥ ३२ ॥ पुरस्ताद्दित्यस्य तृतीयः स्वाहाकारः पूर्णपात्रस्थाने ॥ ३३ ॥ शूलेनावभृथं यन्ति ॥ ३४ ॥ परोगोष्ठं यदार्द्रमनुदकमनौषधिकं च तस्मिन्शामित्रोपवपति ॥ ३५ ॥ शुगसि यं द्विष्मस्तमभिशोचेत्युपोप्यमानमनुमन्त्रयते ॥ ३६ ॥ धाम्नो धाम्नो राजन्नित्यैतस्यान्तादनुवाकस्याध्याधि [चात्वालं] मार्जयित्वा समिधः कृत्वानपेक्षमाणाः प्रत्यायन्ति—एधो ऽस्येधिषीमहि स्वाहेत्याहवनीये समिधमादधाति ॥ ३७ ॥ समिदसि समेधिषीमहीति द्वितीयाम् ॥ ३८ ॥...........[7]

इति षष्ठो ऽध्यायः ॥

---

1 There is nothing in the kindred texts to explain this sūtra.

2 The ms पु॰.

3 MS III. 10. 7. 139 11 has कनूदरं.

4 MS I. 2. 18

The ms माधपयित्वा.

6 MS I. 3. 39 46 11.

7 The remaining part of the Paśubandha is missing

विच्छिद्य जुहूपभृतौ प्रच्छादयति ॥ ५ ॥ शेपामिडायामभितो दैवतानि हिरण्यशकलावद्यति ॥ ६ ॥ रेडसीति[1] स्वधितिना वसाहोमं प्रयौति ॥ ७ ॥ प्रयुता द्वेपाँसीति[2] पार्श्वेनापस्त्वा समरिएवन्निति[1] गृहीत्वा पार्श्वेनापिदधाति ॥ ८ ॥ अनुसुँ पाडिडाँमवद्यति वनिष्ठुँ सप्तमम्[3] ॥ ९ ॥ क्लोमानं[4] पुरीततमिति संकृत्यं[5] वर्धयित्वेडाँ यूपेणोपसिच्य प्रतिपरीत्य प्रचरति ॥ १० ॥ इन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहि । इन्द्राग्निभ्यां छागस्य हविष प्रेष्येति संप्रेष्यति ॥ ११ ॥ घृत घृतपावानं[1] इत्यर्धर्चे याज्यायां[6] वसाहोमं जुहोति ॥ १२ ॥ पृपदाज्येन सकृदेव तेन वनस्पतिँ[7] यजति ॥ १३ ॥ वनस्पतये ऽनुब्रूहि । वनस्पतये प्रेष्येति संप्रेष्यति ॥ १४ ॥ वसामशेपेणँ[7] दिशः प्रति यजति—दिश स्वाहेति[1] पर्यायैः प्रतिदिशम् ॥ १५ ॥ मध्ये पञ्चमेन पूर्वार्धे[8] पष्ठेन ॥ १६ ॥ औपभृतं जुह्वामवनीय स्विष्टकृता प्रचरति ॥ १७ ॥ ऐन्द्रः प्राणे इति यजमानः पशुँ संमृशत्यवदानवन्तम्[9] ॥ १८ ॥ उपहूतायामिडायामध्यूध्नीँ[10] होत्रे हरन्ति[10] ॥ १९ ॥ वनिष्ठुमग्नीध आदधाति यथाग्नीध्रभागम्[11] ॥ २० ॥ दक्षिणासन्मार्जनसंप्रेषमुक्त्वाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीदस्वेति संप्रेष्यति ॥ २१ ॥ शामित्रादाग्नीध्रो ऽङ्गारान्पश्चार्धे वेद्या व्यूह्योपसमादधाति ॥ २२ ॥ उत्तरतो दक्षिणामुख उपविश्य तस्मिन्प्रतिप्रस्थातोपयजति गुदकाण्डमेकादशधा संभिन्दन्नवदाय वषट्कारान्तेष्वनुयाजानामेकैकँ हस्तेन जुहोति ॥ २३ ॥ समुद्रं गच्छ स्वाहेति[12] पर्यायैरेकादश हुत्वा मनो हार्दिँ[13] यच्छेति[12] हृदयदेशमभिमृशति ॥ २४ ॥ ओषधीभ्यस्त्वेति[12] दर्भेषु निमार्ष्टि ॥ २५ ॥ अपः स्पृष्ट्वा पृपदाज्येनानुयाजान्यजति ॥ २६ ॥ देवेभ्यः प्रेष्येति प्रथमे संप्रेष्यति प्रेष्येत्युत्तरान् ॥ २७ ॥ एकादशभिः प्रचर्य स्वरुं जुह्वां त्रिरुपरिष्टा[13]त्त्रिरधस्तादक्त्वा दधाति—दिवं ते धूमो गच्छत्विति[14] ॥ २८ ॥ ऊर्ध्वँ[15] स्वरुहोमात्प्रागनुदेशाद्यूपो नोपस्पृश्यः[15] ॥ २९ ॥ सूक्तवाके सूक्ता प्रेष्येति संप्रेष्यति ॥ ३० ॥ जाघन्या पत्नीः सँयाजयत्युत्तानाया देवानां पत्नीभ्यो ऽवद्यतीडां चाग्नये गृहपतये चाग्नीधे च ॥ ३१ ॥ यज्ञं गच्छ स्वाहेति[12] पर्यायैस्त्रीणि

1 MS I, 2 17.

2 MS I 2, 16 27, 1.

3 ‡ The ms अनुसुँदिडा॰ first hand, वनिष्ठुँ पडिडा॰ second hand.

4 Perhaps प्लीहानं has fallen out. Cp Ap VII 24, 12

5 ‡ The ms second hand संस्कृत्य.

6 The ms याज्यया.

7 Perhaps to be emended to वसाशेषेण. Cp Mān I, 8, 5 29

8 The ms पूर्वार्ध—.

9 The ms अवतानवंत.

10 From MS III. 10. 4 135, 1

11 The ms यथा अग्नीध्रभाग first hand, यथाग्नीध्रभाग second hand.

12 MS I 2 18.

13 The ms त्रि पुरस्तात्.

14 MS I, 3 14, 24, 6.

15 Based on MS III 9, 4 120 6.

तूष्णीको यवान्युप्यामपेषाणां[1] करम्भपात्राणि करोति प्रतिपुरुषँ यजमानस्यैकं चाङ्गुष्ठपर्वमात्राण्येकोद्वीनि ॥ १८ ॥ शमीपर्णैः पूरयित्वा शेपस्य मेषं च मेषीं च कुरुतः[2] ॥ १९ ॥ निक्ताभिरूर्णाभिरावेष्ट्य परःशतानि शमीपर्णानि घासं निवपतः ॥ २० ॥ उत्तरैः परिग्राहैः परिगृह्य दक्षिणस्या वेद्या उत्तरस्याः श्रोण्या अध्युत्तरस्या आ दक्षिणाँसात्स्फ्येन वेदी संभिनत्ति ॥ २१ ॥ पृषदाज्ये गृहीतः सकृदुपस्तीर्य द्विर्दधि द्विरभिघारयेत् ॥ २२ ॥ उद्वासनवेलायामामिक्षयोः खर्जूरसक्तूनावपतः ॥ २३ ॥ मारुत्यां प्रतिप्रस्थाता मेषमवदधाति वारुण्यामध्वर्युर्मेषीम् ॥ २४ ॥ आसादयन्तौ विपरिहरतः ॥ २५ ॥ वारुणीनिष्कापं निदधाति ॥ २६ ॥ उत्तरस्मिन्नग्नौ संमृष्टेऽसंमृष्टे दक्षिणस्मिन्प्रतिप्रस्थाता पत्नीं पृच्छति कतिभिर्मिथुनमचर इति[3] ॥ २७ ॥ सत्यँ विवाचयिषेत् ॥ २८ ॥ यान्निर्दिशेत्तान्वरुणो गृह्णात्विति ब्रूयात् ॥ २९ ॥ प्रघास्यान्हवामहे इति करम्भपात्राण्यादाय यजमानः पत्नी चापरेण विहारमनुपरिक्रम्य पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ शिरस्याधाय दक्षिणस्मिन्नग्नौ शूर्पेण जुहुतः ॥ ३० ॥ मो षू ण इति यजमानः पुरोऽनुवाक्यां जपति ॥ ३१ ॥ यद् ग्रामे इत्युभौ याज्यां निगद्य जुहुतः ॥ ३२ ॥ अक्रन्कर्मेति[4] व्युत्क्रामन्तावनुमन्त्रयेते ॥ ३३ ॥ अध्वर्युर्वा जुहुयादन्वारभेयातामेतौ ॥ ३४ ॥ आज्यभागाभ्यां प्रचर्य स्रुक्पाणिः प्रतिप्रस्थाताकाङ्क्षति यावदध्वर्युरैन्द्राग्नप्रभृतैः प्रचरति ॥ ३५ ॥ मारुत्याः प्रतिप्रस्थाता पूर्वेणावदानेन सह मेषीमवद्यति वारुण्या अध्वर्युरुत्तरेण सह मेषम् ॥ ३६ ॥ इडावत्सरीयाँ स्वस्तिमाशास्त इति यजमानो जपति ॥ ३७ ॥ मिथुनौ गावौ दक्षिणा ॥ ३८ ॥ समवनीय वाजिनं भक्षयत्युपास्ते प्रतिप्रस्थाता ॥ ३९ ॥ पत्नीसँयाजान्समिष्टयजुरध्वर्युर्जुहोति यथा पशुबन्धे ॥ ४० ॥ तूष्णीं प्रतिप्रस्थाता स्रुचँ विहारयति ॥ ४१ ॥ वारुणीनिष्कापेण तुषैश्चावभृथँ यन्ति यथा सोमे साम ऋजीषभक्षणँ स्नानमिति परिहाप्य ॥ ४२ ॥ निवर्तयते—

यद् घर्मे पर्यावर्तयदन्तान्पृथिव्या अधि ।
अग्निस्तिग्मेनेति[7] समानम् ॥ ४३ ॥

इति चातुर्मास्ये [ सप्तमेऽध्याये ] द्वितीयं खण्डम् ॥

चतुर्षु मासेषु साकमेधाः ॥ १ ॥ पूर्वा पौर्णमासीमानीकवतायोपवसेद्-

1 The ms °येवाना first hand, पेषाणां यवनां second hand

2 The ms कुरुते.

3 The ms °मचरदिति.

4 MS I. 10. 2.

5 The ms मारुत्य first hand, मारुत्यां second hand.

6 The ms निस्कारोण first hand, निस्कासेण second hand.

7 MS II. 10. 2 132 16

तत्सत्य तच्छकेय तेन शकेय तेन राध्यासमिति यजमानो जपति ॥ चतुरो मासान्न मॉसमश्नीयान्न स्त्रियमुपैति नोपर्यास्ते जुगुप्सेतानृतात्प्राङ् शेते ॥ मध्वश्नात्यृतौ भार्यामुपैति ॥ सर्वेष्वेन्तरालव्रतानि वैश्वदेवोत्तराणि सह पञ्चसंचैराणि ॥ पर्वाणि व्याख्यातानि ॥ विकारान्व्याख्यास्याम· ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] प्रथम खण्डम् ॥

चतुर्षु मासेषु वरुणप्रघासाः ॥ १ ॥ प्रतिप्रस्थतामिक्षायै मारुत्यै वत्सान पाकरोत्यध्वर्युर्वारुण्यै ॥ २ ॥ प्रतिप्रस्थातु पयसि ॥ ३ ॥ पूर्वकर्माध्वर्योरारात् ॥ ४ ॥ पूर्वेद्युरग्निप्रणयनम् ॥ ५ ॥ वेदी कुरुत उत्तरामध्वर्युर्दक्षिणा प्रतिप्रस्थाता ॥ ६ ॥ असभिन्ने समे[7] ॥ ७ ॥ पृथमात्रमन्तरा ॥ ८ ॥ उत्तरस्यामुत्तरवेदिसंभारा न्युप्याहवनीयादग्नी प्रणयत ॥ ९ ॥ अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति ॥ १० ॥ अग्रेणोत्तरॉं वेदिं प्रतिप्रस्थातान्तरा वेदी प्रतिप्रस्थातैा ॥ ११ ॥ पात्राणि प्रयुनक्ति ॥ १२ ॥ अविनिर्देशे समानमुभयोः कर्म ॥ १३ ॥ यथा वैश्वदेवे हवींष्यो पघपात्राणि ॥ १४ ॥ आमन्त्रणादि प्राणीताः सप्रैषान्मारुतीवर्जे निर्मन्थ्य प्रच रतिमिडामित्यध्वर्युरेव पत्नीसॅयाजप्रभृति[8] ॥ १५ ॥ समानो होता ब्रह्माग्नीध्र उत्कर ॥ १६ ॥ पञ्च संचराण्यैन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा वारुण्या मिक्षा काय एककपालो वाजिनमिति हवींषि ॥ १७ ॥ निरुप्तेषु प्रतिप्रस्थाता

1 The beginning of the Cāturmāsya is lost in the lacuna

2 The ms सर्वेप्य॰

3 The ms सचा॰

4 The ms पूर्वेयुरग्निप्र॰

5 See MS I 10 13 153 4 5

6 The ms ॰वेदि

7 The sutra is corrupt. Cp Āp VIII 5 24, Hir V 4 460

8 The sutra is corrupt.

घ्नन्ति ॥ १४ ॥ दक्षिणार्धे गार्हपत्यस्य पुरोडाशँ श्रपयत्युत्तरार्धे त्र्यम्बकान् ॥ १५ ॥ दक्षिणाग्नौ यवान्भृज्जति[1] ॥ १६ ॥ पेषणवेलायां धाना मन्त्रेण विभजति ॥ १७ ॥ अभिवान्यायाः पयसि[2] मन्थं दोहन इक्षुशलाकया प्रसव्यमालोडयति ॥ १८ ॥ शलाकास्थं मन्थं करोति[3] ॥ १९ ॥ चतुर्गृहीतान्याज्यान्यध्यधि गार्हपत्यं गृह्णाति ॥ २० ॥ तूष्णीं प्रस्तरमुद्धवमादत्ते ॥ २१ ॥ समन्तं बर्हिस्त्रि: स्तृणन्पर्येत्येया विष्ठेति[4] ॥ २२ ॥ त्रिरस्तृणन्प्रतिपर्येति ॥ २३ ॥ एकैकमभ्युदाहरत्युदकुम्भमाज्येनाग्रतः परिषेचनाय ॥ २४ ॥ अग्नये देवेभ्य पितृभ्य समिध्यमानायानुब्रूहीति संप्रेष्यति ॥ २५ ॥ उशन्तस्त्वा हवामह इत्येका सामिधेनी ॥ २६ ॥ तस्यां त्रिरुक्तायाँ सकृदिध्ममादधाति ॥ २७ ॥ न होतारँ वृणीते नार्षेयम् ॥ २८ ॥ अपबर्हिषः प्रयाजान्यजति ॥ २९ ॥ आज्यभागाभ्यां प्रचर्य प्राचीनावीतानि कुर्वते ॥ ३० ॥ विपरिहरन्ति हवीँषि ॥ ३१ ॥ विपरियन्त्यृत्विजः ॥ ३२ ॥ यथास्थानं जुहूः ॥ ३३ ॥ उपभृद्ध्रुवे दक्षिणे ॥ ३४ ॥ यथास्थानं पुरोडाशं दक्षिणां धाना मन्थं दक्षिणतः ॥ ३५ ॥ आग्नीध्रः प्रत्याश्रावयति ॥ ३६ ॥ अपरो यजमानः ॥ ३७ ॥ दक्षिणतो ऽध्वर्युरवद्यति[5] त्रिश्चतुरवदानस्य चतुः पञ्चावदानस्य ॥ ३८ ॥ उद्ङ्ङतिक्राम्[6] सोमाय पितृमते ऽनु स्वधेत्यनुवाचयति ॥ ३९ ॥ ओं[8] स्वधेत्याश्रावयति ॥ ४० ॥ अस्तु स्वधेति प्रत्याश्रावयति ॥ ४१ ॥ सोमं पितृमन्तँ स्वधेति संप्रेष्यति ॥ ४२ ॥ स्वधा नम इति वषट्कारः[9] ॥ ४३ ॥ दक्षिणामुखो[10] दक्षिणार्धे जुहोति ॥ ४४ ॥ एतेन धर्मेण स्विष्टकृदन्तैः प्रचरति ॥ ४५ ॥ अग्नि कव्यवाहन इति स्विष्टकृत् ॥ ४६ ॥ मन्थादीनामिडामवद्यति ॥ ४७ ॥ ब्रह्माग्नीध्रो यजमान इत्यवघ्रेण भक्षयित्वेडाँ हविःशेषाँश्च त्रीन्पिण्डान्कृत्वा स्रक्तिषु प्रसव्यं निदधाति यथा पिण्डपितृयज्ञ उत्तराँ श्रोणीं परिहाप्य ॥ ४८ ॥ तस्यां लेपान्निमार्ष्टि ॥ ४९ ॥ अत्र पितरो मादयध्वमित्युक्त्वा परेत्य सुसंदृशं त्वा वयमित्याहवनीयमुपतिष्ठन्ते ॥ ५० ॥ योजा न्विन्द्र ते हरी इति[11] प्रणवेन ताम्यन्ते ॥ ५१ ॥ यदन्तरिक्षमिति[5] गार्हपत्यम् ॥ ५२ ॥ अमीमदन्त पितर इति परिश्रितं प्रपद्याञ्जनाभ्यञ्जनदशानिह्नवनामिति कृत्वा परेतन पितर इति त्रिरपः परिषिञ्चन्पर्येति ॥ ५३ ॥ अया विष्ठेति[4] त्रिरपरिषिञ्चन्प्रतिपर्येति ॥ ५४ ॥

1 The ms भृजति
2 The ms अभिनवान्यायपयति
3 ! The ms मथ शलाका कुर्वती.
4 Based on MS I 10 17 157 12
5 MS I 10 3
6 The ms दक्षिण
7 Based on MS I 10 18 158 6
8 The ms second hand ओं.
9 From MS ib 15
10 The ms repeats the word
11 MS I 10 3 142 12
हरोम्=हरी+ओम्
12 The ms निरप परिषिंचन्.

त्तरां क्रैडिनीयायै[1] ॥ २ ॥ अग्नयेऽनीकवते प्रातरष्टाकपालो मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुर्मरुद्भ्यो गृहमेधेभ्यः सर्वासां दुग्धे सायमोदन इन्द्रस्य निष्काषः[2] ॥ ३ ॥ यजुषा वत्सानपाकरोति ॥ ४ ॥ अपवित्रे दोहयति ॥ ५ ॥ नेध्माबर्हिः संनह्यति ॥ ६ ॥ नोपभृत्याज्यं गृह्णाति ॥ ७ ॥ ओदनस्य शरोनिष्कापं निदधाति ॥ ८ ॥ श्नीनोदनानुद्धृत्योत्पूतान्करोति ॥ ९ ॥ न सामिधेनीरन्वाह ॥ १० ॥ न प्रयाजान्यजति[4] ॥ ११ ॥ आज्यभागाभ्यां प्रचर्यौदनानाँ सकृत्सकृत्समवदाय प्रचरति ॥ १२ ॥ इडान्ता भवति ॥ १३ ॥ अमात्येभ्य ओदनानुपहरन्ति ॥ १४ ॥ प्रतिवेशमोदनं पचति[5] ॥ १५ ॥ तस्य पत्न्यश्नाति ॥ १६ ॥ आज्याभ्यज्य सुहिता वसन्ति ॥ १७ ॥ ओदनान्प्रतिवेशा पचन्ते गाश्च प्रते ॥ १८ ॥ सवत्सा गावो वसन्ति ॥ १९ ॥ प्राचीनरात्रे ऽभिवान्याया अग्निहोत्र्याश्च वत्सौ बध्नन्ति[7] ॥ २० ॥ पुरा प्रातरग्निहोत्राद्गार्हपत्ये शरोनिष्कापपूर्णा दर्वी [ पूर्णा दर्वे ] परापतेत्यृषभमाह्वयते ॥ २१ ॥ यदृषभो न रूयाद् ब्रह्मा ब्रूयाज्जुहुधीति ॥ २२ ॥ मरुद्भ्यः क्रीडिभ्यः साकँ रश्मिभिः सप्तकपालं निर्वपेत्प्रचरेद्वा ॥ २३ ॥ महाहविषा यजते सोत्तरवेदिमग्निं प्रणीय ॥ २४ ॥ पञ्च संचराण्यैन्द्राग्नो द्वादशकपाल इन्द्राय वृत्रघ्ने चरुर्वैश्वकर्मण एककपाल इति हवीँषि[9] ॥ २५ ॥ पुरस्तात्स्विष्टकृतो ऽग्ने वेहोत्रमित्यभिघारयति ॥ २६ ॥ ऋषभो दक्षिणा ॥ २७ ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] तृतीयं खण्डम् ॥

पितृयज्ञे ऽग्रेण दक्षिणा[ग्निँ] वेदिमुद्धरति ॥ १ ॥ अखाता भवति ॥ २ ॥ प्रागुदीचीनँ स्तम्बयजुर्हरति ॥ ३ ॥ समं चतुरश्रं परिश्रयति ॥ ४ ॥ उत्तरां प्रति वेदिश्रोणिं द्वारं कुर्वन्ति ॥ ५ ॥ एकोल्मुकं मध्ये वेद्याः सादयति ॥ ६ ॥ स आहवनीयः ॥ ७ ॥ वर्षीयो नित्याद्बर्हिरुपमूललूनँ वर्षीयानिध्मः ॥ ८ ॥ अग्रेण नित्यमाहवनीयमतिहारः ॥ ९ ॥ उत्तरतो वेद्याः पात्राणि प्रयुनक्ति ॥ १० ॥ दक्षिणतो निर्वपति ॥ ११ ॥ सोमाय पितृमते षट्कपालः पुरोडाशः पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्यो ऽग्निष्वात्तेभ्यो मन्थः ॥ १२ ॥ तू[ष्णीं]काँस्त्र्यम्बकान्पुरोडाशानेककपालान्प्रतिपुरुषँ यजमानस्यैकाधिकान् ॥ १३ ॥ प्रोक्षणीस्तिग्मान्येवानव-

1 The ms first hand कैडिनीयामये. The second hand makes worthless changes

2 The ms °मोदनं, but cp MS I. 10. 1· 140. 13–15.

3 The ms °त्योत्पुपालं first hand, °त्योत्कपालं second hand.

4 Derived from MS I. 10. 15· 155. 3.

5 Ib 1.

6 The ms second hand परा°.

7 The ms second hand बध्नाति.

8 MS I. 10. 2 142. 6.

9 See MS I. 10. 1. 141. 1–3.

10 MS I. 10. 2. 141. 7.

11 ! The ms °णीः स्तिग्मान् first hand, प्रोक्षण्युदेकेण second hand.

ष्टारी वानड्वाही ॥ ३ ॥ निवर्तयते—

यत्र मासा अर्धमासा ऋतव परिवत्सरा ।

येन तेन प्रजापतय ईजान संनिवर्तयन् ।

तेनाहमस्मि ब्रह्मणा निवर्तयामि जीवसे[1] ॥

इति । अग्निरितिग्मेनेति[2] समानम् ॥ ४ ॥ वैश्वदेवेनैव यजेत पशुकामः सहस्रं पशून्प्राप्योत्तरैः[3] ॥ ५ ॥ शुनासीर्येण ग्रामकामो ऽन्नाद्यकामो वृष्टिकामः पशुकामः स्वर्गकामो वा ॥ ६ ॥ उदकमन्ववसाय तस्योदकार्थान्कुर्वीत[4] ॥ ७ ॥ सांवत्सरीकाणि ॥ ८ ॥ अत्र पञ्च सँवत्सराण्येतेन धर्मेण फाल्गुनारम्भणान्फाल्गुनीसमापनांस्त्रीन्सँवत्सरानिष्ट्वा चैत्र्यारम्भणौ चैत्रीसमापनौ द्वौ यजेत ॥ ९ ॥ अथ पशुमन्ति ॥ १० ॥ वैश्वदेवे सन्नेषु हविःषु यूपाय वैश्वदेवं पशुमुपाकरोति ॥ ११ ॥ यथाकालमविप्रतिषिद्धान् ॥ १२ ॥ पशुना चातुर्मास्यकान्धर्मान्करोति ॥ १३ ॥ समानं पशुकर्मोत्तमात्प्रयाजात् ॥ १४ ॥ उत्तमेन प्रयाजेन प्रचरति ॥ १५ ॥ ध्रुवादीनि हवीँष्यभिघारयति ॥ १६ ॥ सहामिक्षावपामभिघारयति ॥ १७ ॥ आज्यभागाभ्यां प्रचर्य हविर्भिः प्रचरति ॥ १८ ॥ सहामिक्षावपेन प्रचरति ॥ १९ ॥ वपाया संप्रैषाः ॥ २० ॥ पुरस्तात्स्विष्टकृतः पशुपुरोडाशेन प्रचरति ॥ २१ ॥ सहस्विष्टकृत्प्रैषवन्तसहेडा ॥ २२ ॥ समानमान्तात्पशुकर्म ॥ २३ ॥ एतेनोत्तराणि सहपशुसंचराणि पर्वाणि व्याख्यातानि ॥ २४ ॥ विकारान्व्याख्यास्यामः ॥ २५ ॥ वरुणप्रघासेषूभयत्र यूपौ ॥ २६ ॥ मारुतं प्रतिप्रस्थाता पशुमुपाकरोति वारुणमध्वर्युः ॥ २७ ॥ प्रतिप्रस्थातुः पशौ पूर्वं कर्माध्वर्योराराात् ॥ २८ ॥ प्रतिप्रस्थातामिक्षावपेन पूर्वं प्रचरति ॥ २९ ॥ समानमुभयोः कर्म ॥ ३० ॥ एका मनोता ॥ ३१ ॥ प्रतिप्रस्थाता पशुना पूर्वं प्रचरति ॥ ३२ ॥ पशुवर्जमध्वर्योः संप्रैषाः ॥ ३३ ॥ समानेडा ॥ ३४ ॥ साकमेधेष्विन्द्राय वृत्रघ्ने पशुः ॥ ३५ ॥ वायवे नियुत्वते शुनासीर्ये ॥ ३६ ॥ समानमन्यत्समानमन्यत् ॥ ३७ ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] पञ्चम खण्डम् ॥

इति[6] सप्तमो ऽध्यायः ॥

---

1 The mantra is corrupt Cp Mān I 7 8 8

2 MS II 10. 2 132 16

3 Cp MS I. 10. 8 148. 20–149 1

4 Cp MS IV 3. 3 42 4. वर्ष्ये उदके यजेत, Āp VIII. 22 5, 6

5 The ms पशुकामोऽस्मता॰.

6 The ms adds प्राक्सौमिके

अक्षन्नमीमदन्तेति[1] पत्न्यग्निं[2] मनस्वतीश्च प्रत्यायन्ति ॥ ५५ ॥ अग्ने तमद्याश्वमिति[3] गार्हपत्यमुपतिष्ठते ॥ ५६ ॥ अपबर्हिषावनुयाजौ यजति देवौ यज यजेति संप्रेष्यति ॥ ५७ ॥ न पत्नीः सँयाजयन्ति न समिष्टयजुर्जुहोति ॥ ५८ ॥ समाप्येष्टिं प्रागुदञ्चस्त्र्यम्बकैर्यजन्ति ॥ ५९ ॥ मूते पुरोडाशानुपवपन्ति ॥ ६० ॥ एकोल्मुकं पराचीनं धूपायमानँ हरन्ति ॥ ६१ ॥ आखुं ते रुद्र पशुं करोमीत्याखुकिरौ[4] पुरोडाशमेकमुपवपति ॥ ६२ ॥ एकोल्मुकं चतुष्पथ उपसमाधाय पुरोडाशानाँ सकृत्सकृत्समवदायारण्येन पलाशपर्णेन मध्यमेन जुहोति— एष ते रुद्र भाग इति ॥ ६३ ॥ अवाम्ब रुद्रमदिमहीति[3] यजमानो ऽमात्यैः सहाग्निं पर्येति ॥ ६४ ॥ पतिकामापि यायात् ॥ ६५ ॥ भगो ऽसि भगस्येर्पे[5] इत्युदस्य प्रतिलभ्य यजमानाय समावपन्ति ॥ ६६ ॥ पतिकामापि वा[6] ॥ ६७ ॥ त्रिरेतेन धर्मेण ॥ ६८ ॥ यथासमुपयामम् ॥ ६९ ॥ भेषजं गव इति द्वितीयं परियन्ति ॥ ७० ॥ त्र्यम्बकं यजामह इति तृतीयम् ॥ ७१ ॥

सुगन्धिं पतिवेदनम्[7]।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

इति पतिकामा ॥ ७२ ॥ यथाम्नातमितरे ॥ ७३ ॥ मूत उपगृह्य वृक्ष आसजति—रुद्रैष ते भाग[8] इत्युभयतः ॥ ७४ ॥ अनपेक्षमाणाः प्रत्यायन्ति ॥ ७५ ॥ मार्जनँ समिदाधानमिति यथा पशुबन्धे ॥ ७६ ॥ प्राप्यादित्यं घृते चरुं निर्वपति ॥ ७७ ॥ कौडिनिप्रभृत्यादित्यान्तं[9] प्रागस्तमयात्क्रियेत ॥ ७८ ॥ सँस्थितायां पौर्णमासीँ सँस्थाप्य निवर्तयते—

यो ऽस्याः पृथिव्या अधि त्वचि निवर्तयत्योषधीः ।

अग्निस्तिग्मेनेति[10] समानम् ॥ ७९ ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] चतुर्थं खण्डम् ॥

चतुर्षु मासेषु शुनासीर्यँ सद्यश्चतुरहे मासे वा ॥ १ ॥ पञ्च संचराणि वायव्या यवागूः प्रतिधुग्वेन्द्राय शुनासीराय द्वादशकपालः सौर्य एककपाल इति हवीँषि[11] ॥ २ ॥ सीरं द्वादशयोगं दक्षिणोष्टारो वानड्वान्षड्योगँ सीरमु-

1 MS I 10. 3.

2 ? The ms second hand प्रत्यग्निं.

3 MS I, 10 4

4 The ms ०खुकरैः first hand, ०खुकिरि second hand Cp MS I, 10, 20. 160 3

5 ? Perhaps to be emended to भगस्येश (=भगस्येशे).

6 ? The ms second hand पतिकामा वास्.

7 The Samhita पुष्टिवर्धनम्.

8 The ms मूतमुप०.

9 The ms ०दित्याजं.

10 MS II, 10, 2 132, 16.

11 See MS I, 10, 1· 141, 4-5.

12 Identical with MS . 6, 2, 64 16.

अथ

# वाराहश्रौतसूत्रे

चयनम्

प्राकृतीषु सँस्थासु षोडशिवर्जमग्निमुत्तरवेद्यां चिन्वीत ॥ १ ॥ सावि-त्रनाचिकेतौ यानग्निर्वोत्तरवेदिं चिन्वीत सत्त्राहीनेषु ॥ २ ॥ तं चेष्यमाणो ऽमावास्यायामुपनीय हविर्जुहूं प्रथमँ संमृज्यास्तगृहीतेनाज्येन युञ्जानः प्रथममिति[1] सावित्राण्यूर्ध्वस्तिष्ठन्जुहोत्यृचा स्तोममिति[2] द्वितीयां पूर्णाहुतिं पूर्णाम् ॥ ३ ॥ वैणवीमभ्रिं कल्मार्षीँ सुषिराँ सावित्रप्रभृतिभिरादत्ते फलमहेर्वा वृक्षस्य ॥ ४ ॥ इमामगृभ्णन्नित्यश्वाभिधानीमादाय प्रतूर्तँ[3] वाजिन्नित्यश्वमभिदधाति ॥ ५ ॥ युञ्जाथाँ रासभँ युवमित्युत्तरं गर्दभम् ॥ ६ ॥ योगे योगे इत्यश्वपूर्वा वल्मीकामभियन्ति[4] ॥ ७ ॥ अग्निं पुरीष्यमङ्गिरस्वदच्छेमे इति[5] पुरुषमायान्तमनुमन्त्रयते येन संगच्छेत[6] ॥ ८ ॥ तैमिति निर्दिशति ॥ ९ ॥ आगत्य वाज्यध्वानमिति[8] मृदं प्राप्य जपति ॥ १० ॥ आक्रम्य वाजिन्नित्यश्वेन मृदमाक्रमयति ॥ ११ ॥ यं द्विष्यात्तं ब्रूयादमुमभितिष्ठेति ॥ १२ ॥ द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठमभिमृशति ॥ १३ ॥ उत्क्रामे ॥ उदक्रमीदित्युत्क्रान्ते[9] जपति ॥ १४ ॥ आ त्वा जिघर्मीति पदे हिरण्यं निधायाभिजुहोति ॥ १५ ॥ परि वाजपतिरि-त्यभ्रया पदं परिलिखति ॥ १६ ॥ देवस्य त्वेति खनति ॥ १७ ॥ अपां पृष्ठमसीति[10] पुष्करपर्णमाहरति ॥ १८ ॥ शर्म च स्थे इति कृष्णाजिनं च पुष्करपर्णं च सँस्तृ-णाति ॥ १९ ॥ व्यचस्वती सँवसेथामित्युत्तरलोम कृष्णाजिनमधस्तादधिपुष्करपर्णे ॥ २० ॥ तयोर्मृदँ संभरति पुरीष्यो ऽसीति[11] यजुरुत्तराभिर्गायत्रीभिर्ब्राह्मणस्योत्तरा-भिस्त्रिष्टुब्भी[12] राजन्यस्योत्तराभिर्जगतीभिर्वैश्यस्य ॥ २१ ॥ सर्वत्र यजुः ॥ २२ ॥ यं कामयेत ऋध्नुयादिति तस्य गायत्रीभिश्च त्रिष्टुब्भिश्चाष्टभिश्च संभरेत्

1 MS II, 7, 1.

2 MS III 12 1 159, 13. Properly the mantra is for the Aśvamedha

3 MS II, 7, 2.

4 ! The ms वल्मिकायवत्.

5 Very probably one sūtra is missing in our text Cp Mān VI, 1.1 11, 12

6 The ms वा संगछे (for येन संगच्छेत)..

7 The ms तौ॰.

8 Identical with MS III 1 4 5, 7.

9 The ms उदक्रान्ते.

10 MS II 7. 3

11 Identical with MS III, 1, 5 6, 4-5.

12 The ms second hand ॰भ्मी.

आहरतीपुद्धतस्याशनिहतस्य या ॥ ४६ ॥ सत्त मापानुपन्युप्य यमगाथा गायति—

यो ऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी ।
यमं भङ्गश्रवो गाय यो राजानपरोध्यः ॥
यमं गाय भङ्गश्रवो यो राजानपरोध्यः ।
अहरहर्नयमानो गामश्वं पुरुषं यमः ॥
वैवस्वतो न तृप्यति सुराया इव दुर्मदः ।
येनापो नद्यो धन्वानि येन द्यौरुग्रा पृथिवी च दृढा ॥

इति ॥ ५० ॥ वल्मीकवपाँ सप्तधा विदृषयाँ शिरसः स्थाने प्रतिनिदधाति ॥ ५१ ॥

अयँ यो ऽसि यस्य त इदं शिर एतेन त्वँ शीर्षण्वानेधि ।
इदमस्माकं भुजे भोग्याय भूयात् ॥

इति शिर आददीत ॥ ५२ ॥

इति चयने [ प्रथमे ऽध्याये ] प्रथमं खण्डम् ॥

हिरण्यकेशान्सुधुरान्हिरण्याक्षानय शफान् ।
अश्वाननश्वतो दानं यमो राजाधितिष्ठति ॥

इत्याहरति ॥ १ ॥ पूर्वमुंस्याहुतिः ॥ २ ॥ पौर्णमास्यां पञ्च पशूनालभते ऽश्वमृषभँ घृष्णि वस्तं प्राजापत्यं तूपरमिति मुष्करान् ॥ ३ ॥ उपाकरोति— अग्निभ्यः कामाय जुष्टमिति ॥ ४ ॥ वैश्वानरीयो द्वादशकपालः पशुपुरोडाशः ॥ ५ ॥ चतुर्विंशतिँ सामिधेनीः पराचीरन्वाह ॥ ६ ॥ एकादश नित्या उपेमसृक्षीति तिस्रः समास्त्वाग्न इति दर्शे ॥ ७ ॥ अमुनभूयादित्यामयाविनः ॥ ८ ॥

राये अग्ने महे त्वा दानाय समिधीमहि ।
ईळिष्वा हि महि वृषन्नग्ने होत्राय पृथिवीम् ॥

इत्यनामयाविनः ॥ ९ ॥ हिरण्यगर्भ इत्याघारः ॥ १० ॥ ऊर्ध्वा अस्य समिधो इत्याप्रीः ॥ ११ ॥ पुरुषशिरसा सह पर्यग्निं कृत्वा तान्पर्यग्निकृतानुत्सृज्य प्राजापत्यवर्जँ शिराँसि प्रच्छिद्य यस्माद्भूदादिष्टकाः करिष्यन्स्यात्तस्मिन्शरीराणि न्यस्य वल्मीकवपां मृदा शिराँसि प्रलिप्य प्राजापत्येन तन्त्रँ सँस्थापयन्ति ॥ १२ ॥

1 After इदं the ms adds अहं.
2 The ms first hand पूर्वंशि॰.
3 The ms ॰नायजते.
4 MS IV. 12, 4 187, 17.
5 MS II 12 5 148 11.
6 The ms second hand दशाभिकी
7 MS III, 4 6 51, 15-16.
8 The ms second hand धावा.
9 MS II, 7, 15 96 13.
10 MS II, 12, 6, 149, 14.
11 The ms second hand पर्यग्नि.
12 The ms तस्मातसरीराणयस्य वहृन्य.

॥ २३ ॥ अयं ते योनिर्ऋत्विय इति संभृतमभिमृश्यापो देवीरिति[2] स्फ्येन खनति[4] ॥ २४ ॥ वल्मीकवपामाधाय सुजातो ज्योतिषेति[2] मौञ्जेन दाम्नोपनह्यत्यर्कमयेण वा ॥ २५ ॥ उदु तिष्ठ स्वध्वरेत्युर्धंच्छ्रति ॥ २६ ॥ सजातो गर्भ[2] इति हरति ॥ २७ ॥ स्थिरो भव वीड्वङ्ग इति गर्दभ आदधाति[8] ॥ २८ ॥ भरन्नग्निमिति[2] यन्ति ॥ २९ ॥ ओषधय प्रति गृभ्णीतेति[5] परिस्तृणाति ॥ ३० ॥ दर्भेषु सादयति ॥ ३१ ॥ वि पाजसेति[5] विस्रंसयति। वि ते मुञ्चामीति[5] च ॥ ३२ ॥ आपो हि ष्ठेत्यद्भिरुपसृजति ॥ ३३ ॥ अजलोमभिः कृष्णाजिनलोमभिरर्मकपालैः[10]शर्कराभिः सिकताभिर्वैणवङ्गारैरिति लोमवर्जं चूर्णं कृतैर्मित्र संसृज्येति[5] संसृजति ॥ ३४ ॥ संसृष्टासो ग्वा पत्नी करोति[12] ॥ ३५ ॥ मखस्य शिरोऽसीति[13] पिण्डमभिमन्त्र्य वसवस्त्वा कृण्वन्त्विति[13] त्र्युद्धिं चतुरश्रां[14] करोति ॥ ३६ ॥ उत्तमे तृतीये ऽदित्या रास्नासीति[13] रास्नां करोति ॥ ३७ ॥ अंशर्णो रास्नायाश्च समवाये[15] स्तनौ कृत्वादितिष्टे बिलं गृभ्णात्विति[13] द्वारं करोति ॥ ३८ ॥ कृत्वाय सा महीमित्यभिमन्त्र्य सिकतासु विषिञ्चति ॥ ३९ ॥ शेषस्यापाढां त्र्यालिखिता मिष्टकां करोति ॥ ४० ॥ शुष्कामुखां वसवस्त्वा धूपयन्त्वित्यश्वशकेन गार्हपत्ये धूपयति ॥ ४१ ॥ अदितिष्ट्वेति[13] गर्तं खात्वा देवाना त्वा पत्नीरित्यवदधाति ॥ ४२ ॥ तूष्णीमुखां[16] पचनेन पर्युह्य धिषणा त्वा देवीत्यग्निना समिन्द्धे ॥ ४३ ॥ मास्त्वा देवीरिति[13] पच्यमानामनुमन्त्रयते । मित्रैतां त उखा परिददाम्यभित्त्यै एषा मा भेदीति[18] च ॥ ४४ ॥ मित्रस्य चर्षणीधृत इत्यागामम् ॥ ४५ ॥ देवस्त्वा सवितोद्वपत्विति[13] पक्कामुद्वपति ॥ ४६ ॥ उत्तिष्ठ बृहती भवेत्युच्छ्रयति ॥ ४७ ॥ मित्रैतां त इत्यभिमन्त्र्य वसवस्त्वाच्छृन्दन्त्वित्यजक्षीरेणाच्छृणत्ति चतुः ॥ ४८ ॥ वैश्यस्य राजन्यबन्धोर्वा शिर

1 MS II 7. 3
2 MS II 7. 4
3 The ms adds योनिरिति.
4 This is not clear, as the digging has already been done The original ms has खति, which is changed to खनति by the second hand
5 The ms च
6 The ms उदु तिष्ठ स्व-रित्युच्च first hand, उदु तिष्ठस्व इयु• second hand
7 Identical with MS III 1 6 beg.
8 MS II 7 5
9 MS II 12 3 147. 1.
10 ? The ms •र्मकपालिनीकाभि first hand, •र्मकपाले second hand
11 The ms second hand घृर्णीकृ•.
12 The sūtra is hopelessly corrupt We could have something like this संसृष्टामिति पत्न्यै प्रयच्छति । सोखां करोति
13 MS II 7. 6
14 The ms second hand •श्रीं.
15-15 The ms first hand अंशिक-समवाये (pointing to अंशिरास्नासमवाये ?)
16 The ms विष्टु•
17 The ms •मुगाया first hand, •मुगाया second hand
18 The ms first hand मित्रैता त्वा उप धामित्या.
19 The ms first hand मभिनाति च
20 ? The ms second hand इति उखां.

आहरतीपुहतस्याशनिहतस्य वा ॥ ४६ ॥ सप्त मापानुपन्युप्य यमगाथा गायति—

यो ऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी ।
यमं भङ्गश्रवो गाय यो राजानपरोध्य. ॥
यमं गाय भङ्गश्रवो यो राजानपरोध्यः ।
अहरहर्नयमानो गामश्वं पुरुषं यम ॥
वैवस्वतो न तृप्यति सुराया इव दुर्मद' ।
येनापो नद्यो धन्वानि येन द्यौरुग्रा पृथिवी च दृढा ॥

इति ॥ ५० ॥ वल्मीकवपाँ सप्तधा वितृण्णाँ शिरसः स्थाने प्रतिनिदधाति ॥ ५१ ॥

अयँ यो ऽसि यस्य त इदँ शिर एतेन त्वँ शीर्षण्वानेधि ।
इदमस्माकं भुजे भोग्याय भूयात् ॥

इति शिर आददीत ॥ ५२ ॥

इति चयने [ प्रथमे ऽध्याये ] प्रथमं खण्डम् ॥

हिरण्यकेशान्सुधुरान्हिरण्याक्षानय शफान् ।
अश्वाननश्वतो दानँ यमो राजाधितिष्ठति ॥

इत्याहरति ॥ १ ॥ पूर्वमुख्याहुतिः ॥ २ ॥ पौर्णमास्यां पञ्च पशूनालभते[1] ऽश्वमृषभँ वृष्णिं वस्तं प्राजापत्यं तूपरमिति मुष्करान् ॥ ३ ॥ उपाकरोति— अग्निभ्य. कामाय जुष्टमिति ॥ ४ ॥ वैश्वानरीयो द्वादशकपालः पशुपुरोडाशः ॥ ५ ॥ चतुर्विँशतिँ[2] सामिधेनीः पराचीरन्वाह ॥ ६ ॥ एकादश नित्या उपेमसृक्षीति[3] तिस्रः समास्त्वाग्ने[4] इति दर्शं ॥ ७ ॥ अमुनभूयादित्यामयाविनः[5] ॥ ८ ॥

राये अग्ने महे त्वा दानाय समिधीमहि ।
ईडिष्वा हि महि वृषन्नग्ने[6] होत्राय पृथिवीम् ॥

इत्यनामयाविनः ॥ ९ ॥ हिरण्यगर्भ[7] इत्याघारः ॥ १० ॥ ऊर्ध्वा अस्य समिधो[8] इत्याप्रीः ॥ ११ ॥ पुरुषशिरसा सह पर्यग्नि[9][10] कृत्वा तान्पर्यग्निकृतानुत्सृज्य प्राजापत्यवर्जँ[11] शिराँसि प्रच्छिद्य यस्माद्भूतादिष्टकाः करिष्यन्स्यात्तस्मिन्शरीराणि न्यस्य वह्र्यौ मृदा शिराँसि प्रलिप्य प्राजापत्येन तन्त्रँ सँस्थापयन्ति ॥ १२ ॥[12]

1 After इदं the ms adds अहं.
2 ? The ms first hand पूर्वशि॰
3 The ms ॰नायजते
4 MS IV. 12 4 187. 17
5 MS II 12 5 148 11.
6 The ms second hand दशाभिर्की
7 MS III. 4 6 51. 15-16.
8 The ms second hand यावा
9 MS II. 7. 15 96 13
10 MS II. 12 6 149 14.
11 The ms second hand पर्यम्नि.
12 The ms तस्मातसरीराण्यस्य वहुन्य.

यद्येताम्नालभेत वायवे नियुत्वते श्वेतं तूपरमजमालभेत ॥ १३ ॥ प्राजापत्यो द्वादशकपालः पशुपुरोडाशः ॥ १४ ॥ समानमन्यत् ॥ १५ ॥ आग्नावैष्णव एकादशकपाल आदित्येभ्यो घृते चरुरग्नये च वैश्वानराय द्वादशकपाल इति दीक्षणीया ॥ १६ ॥ समानमा दीक्षाहुतिभ्यः पूर्णाहुतिवर्जम् ॥ १७ ॥ आध्वरिकीर्हुत्वाकूतमग्निमिति[1] षडाग्निकीर्जुहोति ॥ १८ ॥ अन्त[त]ः पूर्णाहुतिः ॥ १९ ॥ पुरस्ताद्वाचोयमस्याहवनीय उखां प्रवृणक्ति—मा सु भित्थो इति ॥ २० ॥ जातमवदध्यादित्यान्नातानि काम्यानि ॥ २१ ॥ आयन्नग्नौ[3] समिध आदधाति द्रुन्न इति क्रुमुकं घृताक्तम्[4] ॥ २२ ॥ प्रजाते परस्या अधि संवत इत्यौदुम्बरीम् ॥ २३ ॥ परमस्या परावत इति वैकङ्कतीम् ॥ २४ ॥ यदग्ने यानि कानि चेति[5] पञ्चभिः पञ्चौदुम्बरीरपरशुवृक्णाः ॥ २५ ॥ ये जनेषु मलिम्लव इति वैकङ्कतीम् ॥ २६ ॥ दंष्ट्राभ्यामित्याश्वत्थीम् ॥ २७ ॥ यो अस्मभ्यमरातीयादिति[6] तैल्वकीँ[7] यद्यभिचरति ॥ २८ ॥ उदेषा बाहून् ॥ संशित मे इत्यौदुम्बर्यां[8] यजमानँ वाचयति ॥ २९ ॥ मह्म यजमित्यनादिष्टवृक्षाम् ॥ ३० ॥ उख्ये भ्रियमाणे वृष्टिकामस्य याः सौरी रश्मिवतीस्तासां तिसृभिस्तिस्र आश्वत्थीः समिध आदध्याद् भ्राजस्वतीभिः सौरीभिरवृष्टिकामस्य[9] ॥ ३१ ॥ यदि पशुपतिरभिमन्येत भिषग्वतीभिराग्नेयीभिः[9] ॥ ३२ ॥ यदि नश्येदग्ने ऽभ्यावर्तिन् ॥ अग्ने ऽङ्गिरः ॥ पुनरूर्जा ॥ सह रय्येत्युपतिष्ठते ॥ ३३ ॥ सौवर्णँ[10] रुक्मं पाशवन्तमेकविँ[11]शतिनिर्बाधम् ॥ ३४ ॥

इति चयने [ प्रथमे ऽध्याये ] द्वितीय खण्डम् ॥

दृशानो रुक्म इत्युपरिष्टान्निर्बाधं प्रतिमुञ्चते ॥ १ ॥ नक्तोषासेति[1] कृष्णाजिनम् ॥ २ ॥ सुपर्णो ऽसि गरुत्मानित्यभ्युच्छ्रयति ॥ ३ ॥ प्रादेशमात्रपादारत्निमात्रशीर्षण्या मौञ्जशिक्यौदुम्बर्यासन्दी फलकास्तीर्णा ॥ ४ ॥ तस्यां[11] षड्‌द्यामं मौञ्जशिक्यमवधाय[11]

मातेव पुत्रं पृथिवी पुरीष्यमग्निँ स्वे योनौ बिभर्तूखाम् ।
[ताँ] विश्वैर्देवैर्ऋतुभि संविदान प्रजापतिर्विश्वकर्मा युनक्तु ॥

इत्यादधाति ॥ ५ ॥ विश्वा रूपाणीति[1] शिक्यपाशं प्रतिमुञ्चते ॥ ६ ॥

1 MS II 7 7.
2 MS III 1. 9 11 19 sqq
3 ? The ms first hand आयामग्नौ.
4 See MS ib 12 4.
5 Here the Sūtrakāra deviates from his Samhitā (ib 9)
6 The ms रश्मिवती यासां.
7 The sūtra is based on KS XXII 12 67. 16 The mantras alluded to are found neither in MS nor in KS
8 MS I 7 1.
9 MS II. 7 8
10 The ms तस्या
11 The ms अवदायाद

नक्तोपासेति' कृष्णाजिनम् ॥ ७ ॥ सुपर्णो ऽसि गरुत्मानित्युरस्यमुद्गच्छन्नुपरिनाभि विपरिवर्तयति' ॥ ८ ॥ विष्णोः क्रमो ऽसीति' पर्यायैर्यजमानश्चतुरः क्रमान्क्रामति ॥ ९ ॥ अक्रन्ददग्निरिति' क्रमाणां पारे जपति ॥ १० ॥ दक्षिणावर्तते—[अग्ने] ऽभ्यावर्तिन्निति' ॥ ११ ॥ आ त्वा हार्षमित्यावृत्य जपति ॥ १२ ॥ उदुत्तममिति' शिक्यपाशमुन्मुञ्चते ॥ १३ ॥ अग्ने बृहन्नुषसामित्युन्मुच्य जपति ॥ १४ ॥ हँसः शुचिषदित्यादधाति ॥ १५ ॥ सन्नवतीभिरुपतिष्ठते । दिवस्परीति' च वात्सप्रेण ॥ १६ ॥ रुक्मप्रतिमोचनादि वत्सप्रान्तँ यजमानः करोति ॥ १७ ॥ अनुगम[यत्याहवनीयम् ] ॥ १८ ॥ मुष्टिकरणाद्याध्वरिकेण दीक्षोपायो व्याख्यातः ॥ १९ ॥ व्यत्यासं क्रमणँ वात्सप्रेण करोति पूर्वेद्युः क्रामत्युत्तरेद्युर्वात्सप्रम् ॥ २० ॥ येन देवा ज्योतिषेत्यँहरहर्घृताक्ताँ समिधमादधाति ॥ २१ ॥ अप्रपर्तं इति व्रतकालेष्वनाक्ताम् ॥ २२ ॥ समिधाग्निमिति" चानक्ताम् ॥ २३ ॥ गायत्र्या ब्राह्मणस्यादध्यात् प्र प्रायमग्निरिति" त्रिष्टुभा राजन्यस्य द्वाभ्यां गायत्रीभ्याँ वैश्यस्य ॥ २४ ॥ प्रयासम्ननसि विहारमादधाति ॥ २५ ॥ उदु त्वा विश्वे देवा इत्यग्निमुद्यच्छति ॥ २६ ॥ हँसः शुचिषदित्यादधाति ॥ २७ ॥ सन्नवतीभिरुपतिष्ठते ॥ २८ ॥ प्रेदग्ने इति प्रयापयति ॥ २९ ॥ अक्रन्ददग्निरिति" सर्जदभिमन्त्रयते ॥ ३० ॥ यद्युखा भस्मना प्रतिपूर्येतेष्टकासु कार्यम् ॥ ३१ ॥ पुरीषे पशुकामः कुर्वीत ॥ ३२ ॥ अप्सु यायावरः प्रवपेत् ॥ ३३ ॥ आपो देवीरिति" प्रथयति ॥ ३४ ॥ प्रसद्य भस्मना ॥ पुनरासद्येति" भस्ममुष्टी प्रत्यावपति ॥ ३५ ॥ पुनरूर्जा" ॥ सह रय्येति" निवृत्येँ बोधा मे अस्येत्युपतिष्ठते ॥ ३६ ॥

इति चयने [ प्रथमे ऽध्याये ] तृतीय खण्डम् ॥

दीक्षितस्येष्टकाः कुर्वन्त्यदीक्षितस्य वा ॥ १ ॥ न त्वेवानालब्धप्राजापत्यस्य ॥ २ ॥ मृन्मयीस्त्र्यालिखिताश्चतुरथा दक्षिणावृतः सव्यावृत ऋजुलेखाश्च निर्मन्थ्येन लोहिनीः'' पचन्त्यन्वाहार्यपचनेन वा ॥ ३ ॥ समाप्तासु दीक्षासु क्रमवात्सप्रे ॥ ४ ॥ तस्या एतक्षिनति (?) देवयजनमध्यवस्यति''

1 MS II 7 8.

2 ! The ms विपरिवर्ति first hand, धारयमाणो second hand

3 MS II, 7, 9.

4 The ms first hand क्रम वत्स°. The second hand is worthless.

5 MS II 7. 12. 91, 9.

6 MS II. 10, 1 132, 5

7 MS II, 7, 10,

8 MS II 6, 12 71, 14

9 ! The ms second hand अक्षशब्दमभि°

10 ! The ms विवृत्यसप्त first hand, विहृत्य second hand.

11 In the ms लोहिनी is put after त्र्यालिखिता.

12 Cp KS XX 1, 18, 7 अपेत वीत वि च'' सर्पतात इति देवयजनमध्यवस्यति.

॥ ५ ॥ आहवनीयदेशे गार्हपत्यं चिनोति ॥ ६ ॥ मण्डलं चतुरश्रं वा व्यायाममात्रं विमायोद्धत्याद्भिरवोक्ष्य यो नो अग्निः[1] ॥ मयि गृह्णामीति[2] जपति ॥ ७ ॥ चितः स्थ परिचितः स्थेत्येकविंशत्या शर्कराभिः परिश्रयति ॥ ८ ॥ अग्नेर्भस्मासीति[3] सिकता निवपति ॥ ९ ॥ संज्ञानमसीत्यूषान्न्युप्य व्यूहति ॥ १० ॥ अयं सो अग्निरिति[3] प्रभृतिभिश्चतसृभिर्मध्ये प्राचीरुपदधाति ॥ ११ ॥ इडामग्ने[3] ॥ अयं ते योनिर्ऋत्विय इति द्वे समीची पुरस्ताच्चिदसि तया देवतयाङ्गिरस्वद्ध्रुवासीदेति[3] ॥ १२ ॥ परिचिदसीति[3] द्वे समीची पश्चात् ॥ १३ ॥ त्रयोदश च लोकंपृणाः ॥ १४ ॥ पृष्ठे दिवीति[4] चात्वालदेशात्पुरीषमाहृत्य व्यूहति ॥ १५ ॥ एवं सर्वांश्चिनोति ॥ १६ ॥ पञ्चचितिकं प्रथमं त्रिचितिकं द्वितीयमेकचितिकं तृतीयम् । सर्वत्र वैकचितिकम् ॥ १७ ॥ संचिते समितं संकल्पेथामित्युख्यं निवपति ॥ १८ ॥ मातेव पुत्रमिति[7] शिक्याद्दुखां विमुञ्चते ॥ १९ ॥ न रिक्तामवेक्षते ॥ २० ॥ प्रत्यग्दक्षिणा नैर्ऋतीमियन्ति ॥ २१ ॥ यदस्य पारे इति शिक्यमादत्ते ॥ २२ ॥ तिस्रस्तुषपक्वाः कृष्णा इष्टकाः[8] स्वकृत इरिणे ऽसुन्वन्तमिति[9] तिसृभिः परां परामुपदधाति ॥ २३ ॥ न तयादेवतं करोति ॥ २४ ॥ यं ते देवीति[10] शिक्यमधिवपति[11] ॥ २५ ॥ रुक्मसूत्रमासन्दीमिति निधाय यदस्य पारे रजस इत्यपः परिषिञ्चन्पर्येति ॥ २६ ॥ भूत्यै नम इत्युक्त्वा निवृत्य

> शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
>
> शं योरभिस्रवन्तु नः ॥

इति परोगोष्ठं मार्जयन्ते[12] ॥ २७ ॥ अनपेक्षमाणाः प्रत्यायन्ति ॥ २८ ॥ निवेशनं इति गार्हपत्यमुपतिष्ठन्ते ॥ २९ ॥ येन देवा ज्योतिषोर्ध्वाहवनीयं यजमानः समिन्द्धे ॥ ३० ॥ प्रायणीयाप्रभृति समानमोपसद्भ्यः ॥ ३१ ॥ पूर्वाह्णिकीमुपसदं कृत्वा यूपं छित्त्वा वेदिं कृत्वाग्निं विदधाति सप्तपुरुषं त्रीन्प्राचश्चतुरस्तिर्यक्[13] ॥ ३२ ॥ पुरुषमात्राणि पक्षपुच्छानि भवन्ति ॥ ३३ ॥ आत्मा चतुःपुरुषो[14]

1 MS I. 6. 1.

2 MS II. 7. 11.

3 The ms first hand यश्च, which is struck off by the second hand.

4 MS II. 13. 11- 16 I. 14.

5 The ms पुरीषमसीति हृत्य first hand, ॰पुरीषमसीति पुरीषमाहृत्य second hand.

6 The ms चैक॰.

7 The ms न निरहम॰.

8 MS II. 7. 12.

9 The ms इष्टकास्तिस्रः.

10 The ms शुंधध्व॰.

11 ! The ms शिक्यं नाभिनयति.

12 The ms adds इयुमयतो.

13 The ms second hand उदीच. (for तिर्यक्).

14 The ms adds अग्निर्.

भवति ॥ ३४ ॥ अरत्निं पक्षयोरत्युपदधाति[1] ॥ ३५ ॥ प्रादेशमात्रं पुच्छे[2] वितस्तिं वा ॥ ३६ ॥ प्रजापतिष्ट्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति विहितस्य मध्यं[3] विमृश्य सजूरब्दै इति दर्भस्तम्बे हिरण्ये च मध्ये ऽग्नौ जुहोति ॥ ३७ ॥ द्वादशयुक्तेन सीरेणाग्निं कृपति षड्युक्तेन वा ॥ ३८ ॥

इति चयने [ प्रथमे ऽध्याये ] चतुर्थं खण्डम् ॥

सं वरत्रा दधातन निराहावान्कृणोतन ।
सिञ्चामहा अवटमुद्रिणं वयं विश्वाहाजस्रमक्षितम् ॥
निष्कृताहावमवटं सुवरत्रं सुषेचनम् ।
उद्रिणं सिञ्चे अक्षितम् ॥

इति युगवरत्राणि संवध्नाति ॥ १ ॥ पूषा युनक्त्विति[6] युनक्ति ॥ २ ॥ लाङ्गलं पवीरवमिति[6] कृपति ॥ ३ ॥ पुच्छादधि शिरः शिरस्तः पुच्छं पुच्छतः शिरस्तिस्रः सीताः संपादयति ॥ ४ ॥ एतेन धर्मेण दक्षिणावर्तो दक्षिणस्मात्पक्षादुत्तरमुत्तरस्याः श्रोण्या दक्षिणमंसं दक्षिणस्या उत्तरम् ॥ ५ ॥ द्वादश सीताः संपाद्य प्राच उत्सृजन्ति—विमुच्यध्वमघ्न्या इति ॥ ६ ॥ विसृज्याध्वर्यवे वैकर्षणान्ददाति ॥ ७ ॥ कृष्टे[9] सर्वौषधानि यवांश्च मधूद्युतान्वपति—या ओषधय इति चतुर्दशभिः ॥ ८ ॥ यस्य न वपेत्तं मनसा ध्यायेत् ॥ ९ ॥ तस्येध्मे ऽपि[12] कुर्यात् ॥ १० ॥ ये वनस्पतीनामाक्षफलास्तेषामग्नीषोमीयायेध्मे संनह्येत् ॥ ११ ॥ शिष्टान्मनसा ध्यायेत् ॥ १२ ॥ व्युत्कृष्टे लोष्टादिस्तेभ्यो यथाहृतां मध्याय संभरति—मा नो हिंसीदिति[13] चतसृभिः ॥ १३ ॥ यां जनतां क्षुध्यन्तीमिच्छेत्तां प्रतीषमूर्जमित्युक्त्वाददीत ॥ १४ ॥ यथा मन्येत तस्यां निहनिष्यतीत्येवमुपक्रमेत ॥ १५ ॥ कामं कामदुघे धुक्ष्वेति[13] लोष्टान्कृष्टां चाभिमृशति ॥ १६ ॥ व्याघारणान्तामुत्तरवेदिं करोति ॥ १७ ॥ अग्निरुत्तरवेदिः ॥ १८ ॥ एतेन धर्मेणापरिमिताभिः शर्कराभिरग्निं परिश्रयति ॥ १९ ॥
व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।

1 Nearly identical with MS III, 2, 4. 21 2.
2 The ms पुच्छं.
3 The ms मध्यम first hand, मध्यमं second hand.
4 MS II 12. 3 146 2
5 The ms second hand विश्वाहादस्त॰.
6 MS II, 7, 12.
7 The ms पुच्छादधि शिरस्कत· पुच्छंसुत (पुच्छादंसत second hand).
8 The ms ॰जंते. Cp MS III, 2 3. 21, 9
9 ! The ms सर्वे कृष्टे.
10 MS II 7, 13.
11 The ms निवपेत् (for न वपेत्).
12 ! The ms इमव (for तस्येध्मे ऽपि). Cp MS III, 2, 4 21, 17.
13 MS II 7, 14.

पुरः कृणुध्वमयसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥
परि निविष्टपध्वरं यात्यग्नी रथीरिव।
आ देवेषु प्रयो दधत् ॥

परि वाजपतिरिति परिश्रितमभिमन्त्र्याग्ने तव श्रवो वय इति सिकता निवपति ॥ २० ॥ संज्ञानमसीत्यूषान्न्युप्याप्यायस्व ॥ सं ते पयांसीति[2] व्यूहति ॥ २१ ॥ सीतामध्ये कुम्भेष्टकां उपदधाति पद् कुम्भा द्वे द्वे रूपं च कृष्णी [च] चतस्रो उपचतः स्वयमातृण्णालोके द्वे दिक्षु समन्या यन्तीति[3] यजुषो पर्द् ॥ २२ ॥ प्रथमयाद्भिः पूरयित्वोत्तराभिर्द्वादशोपधाय द्वाभ्यामुपतिष्ठेत ॥ २३ ॥ दिवि श्रयस्वेति[4] नैवार चरुं पयसि श्रृतमुपदधाति ॥ २४ ॥

इति चयने [ प्रथमे ऽध्याये ] पञ्चम खण्डम् ॥

सूददोहसा सह लोकंपृणाः सर्वेष्टकासु तया देवतया करोति ॥ १ ॥ शीर्षाव्यवसेस्थाप्ययं इति लोको मध्ये स्वयमातृण्णालोकः ॥ २ ॥ वर्जयेत्कृष्णां भिन्नामलक्ष्मीमिति[5] ॥ ३ ॥ दक्षिणावृद्भिर्दक्षिणं पुच्छमुपदधाति सव्यावृद्भि रुत्तरमृजुलेखाभिर्दोषम् ॥ ४ ॥ अग्रेणाहवनीयमानडुहे चर्मणि मुख्याश्चितीना मासाद्य संप्रेष्यति—चित्यमिभ्य इत्युपांशु प्रणीयमानेभ्यो ऽनुब्रूहीत्युच्चैः ॥ ५ ॥ प्राचीमनु प्रदिशमिति[6] प्रणयति ॥ ६ ॥ अश्वपूर्वा यन्ति ॥ ७ ॥ उत्तरं पुच्छाप्ययं प्रत्याक्रम्यैन्द्र सानसिं[7] रयिमित्याक्रमणमुपदधाति ॥ ८ ॥ पुरस्तात्प्राचीनास्तेन स्वयमातृण्णालोकमभ्यस्थाँ विश्वा इत्याक्रमयति ॥ ९ ॥ प्राञ्चं प्रक्रमय्य प्रत्यञ्चमभ्यावर्तयति ॥ १० ॥ तपो योनिरसीति[11] पदे पुष्करपर्णमुपदधात्यपां पृष्ठमसीति[12] च ॥ ११ ॥ अधस्ताद्याभिपुष्करपर्णे रुक्मं ब्रह्म जज्ञानमिति[13] पश्चात्पाशमधस्तान्निर्बाधं सादयति[14] ॥ १२ ॥ कृणुष्व पाजे इति पञ्चभिरक्ष्णया व्याघारयति ॥ १३ ॥ हिरण्यगर्भ[15] इति रुक्मे सौवर्णं पुरुषमुत्तानमुपदधाति ॥ १४ ॥ द्रप्सश्चस्कन्देत्यभिमन्त्र्य नमो ऽस्तु सर्पेभ्यो इति तिसृभिरनुदिशति व्याघारयति च यथा रुक्मम् ॥ १५ ॥ अयमभि

1 This verse occurs in MS IV, 13 4 203 3 without any variations, and there also it is followed by परि वाजपति
2 MS II 7, 14
3 MS II 7 11 89 6.
4 The ms रुमष्टका first hand, अमीष्टका second hand
5 MS II 13 1
6 The sutra is hopelessly corrupt Cp Mān VI 1 6 18–20
7 ?
8 ? The ms ०लक्ष्मीति
9 MS I 6 2
10 MS IV 12 3 184, 13
11 MS II, 13 2 153 6
12 MS II 7 3 76 16
13 MS II 7 15.
14 ? The ms पश्चाभ्यसमधस्तान्निर्बाध

सहस्रिणे इति स्रुचं कार्ष्मर्यमयीं घृतस्य पूर्णां दक्षिणतः सादयति ध्रुवो यज्ञस्येति[1] दध्न औदुम्बरीमुत्तरतः ॥ १६ ॥ तेजो ऽसीति[2] हिरण्येष्टकां शर्करां स्वयमातृण्णामश्वेनोपघ्राप्य भूर्भुव स्वरित्यभिमन्त्र्य ध्रुवासि धरुणेति[3] चाविदुषा सह ब्राह्मणेन प्रजापतिष्ट्वा सादयत्विति पुरुषे सादयति ॥ १७ ॥ पुरुषस्यास्ये छिद्रं करोति ॥ १८ ॥ भूरिति प्राचीमुदूहेदिति[4] ब्राह्मणव्याख्यातम् ॥ १९ ॥ चित्तिं जुहोमीत्येतस्यां जुहोति ॥ २० ॥ पृथिवीमाक्रमिषमिति यजमानं वाचयति ॥ २१ ॥ यजमानो ऽविदुषे वरं दद्यात्यविद्वानध्वर्यवे ॥ २२ ॥[5] यास्ते अग्न आर्द्रा योनय इति कुलायिनीम् ॥ २३ ॥ काण्डात्काण्डादिति[6] दूर्वेष्टकां लोष्टं दूर्वामिश्रं संसृष्टं स्वयमातृण्णायाः ॥ २४ ॥ यास्ते अग्ने सूर्ये रुच इति वामभृतं हिरण्यशकलावध्यूह्य ॥ २५ ॥[7] विराड् ज्योतिरधारयन्नूरसि भुवनस्य रेत इति रेतःसिचम् ॥ २६ ॥ स्वराड् ज्योतिरधारयन्नूरसि भुवनस्य रेत इति द्वितीयाम् ॥ २७ ॥ सम्राड् ज्योतिरधारयदिति[8] तृतीयाम् ॥ २८ ॥ प्रथमायां चितौ यून उपदध्यान्मध्यमायां वियसो विहृता स्थविरस्य ॥ २९ ॥ पुत्री चिन्वीतेति द्वयोर्ब्राह्मणम् ॥ ३० ॥ बृहस्पतिष्ट्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीमिति[8] विश्वज्योतिषम् ॥ ३१ ॥ उदपुरा नामासीति[9] मण्डलामवदध्यात् ॥ ३२ ॥ ऋतव्या उपदधाति—मधुश्च माधवश्चेति[10] पर्यायैर्द्वे द्वे चित्यां चित्यां चतस्रो मध्यमायाम् ॥ ३३ ॥ द्वे द्वे पर्यायेणाभिरन्तःश्लेषो ऽसीत्येनुपजेत् ॥ ३४ ॥ धर्मेष्टका उपधायापाढासीत्यपाढाम् ॥ ३५ ॥ कूर्मं कच्छपं मत्स्यं दध्ना मधुना घृतेन मधु वाता ऋतायत इति तिसृभिः समाज्यायां त्वा गह्वरेसादयामीत्यभिमन्त्र्य मही द्यौरिति[8] पुरस्तात्प्रत्यञ्चं सादयति ॥ ३६ ॥ औदुम्बरमुलूखलमुसलं प्रादेशमात्रं चतुःस्रक्ति ॥ ३७ ॥

इति चयने [ प्रथमे ऽध्याये ] षष्ठं खण्डम् ॥

यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥

इति व्रीहीनवहत्य सहव्रीह्युपदधाति—इदं विष्णुरिति[8] दक्षिणतः पुरस्तात्स्वयमातृण्णायाः ॥ १ ॥ उखां सिकताभिः पूरयति दध्ना मधुना घृतेन वा—अग्ने युक्ष्वा हि ये तवे । युक्ष्वा हि देवहूतमानिति[11] संहिताभ्यामभिजुहोति ॥ २ ॥ वि-

1 MS II. 7. 15.
2 The ms adds सह.
3 MS III. 2. 6 24. 15.
4 MS II. 10 6 139. 8.
5 The ms ददाति । स विद्वा॰.
6 MS II. 7. 16
7 1 Thus the ms second hand. The first hand ॰शकलावहृत्य मूर्भि.
8 "According to the Brāhmana (III. 2. 6 25. 8) there may be only two of these iṣṭakās" ?
9 MS II. 8. 14: 117. 7.
10 MS II. 8. 12.
11 MS II. 7. 17.
12 The ms inserts अग्ने before युक्ष्वा. Cp MS ib 101. 10.

पाद्य नक्तोषासा[1] ॥ स्रुता देवेभिरित्यादत्ते ॥ ३ ॥ पृथिवि पृथिव्यॉं सीदेति[2] सादयत्यु त्तरत पुरस्तात्स्वयमातृण्णाया यावत्पुलूपलम् ॥ ४ ॥ समित्स्रवन्तीति[3] दध्ना मधुमिश्रेण शिरांसि पूरयित्वा छिद्रेषु हिरण्यशकलानभ्यस्यति—ऋचे त्वेति[4] दक्षिणस्मिन्कर्णच्छिद्रे रुचे त्वेति[5] सव्ये भास त्वेति[5] दक्षिणस्मिन्नक्षिच्छिद्रे ज्योतिषे त्वेति[5] सव्ये ऽभूदिदमिति[5] दक्षिणस्मिन्नासिकाछिद्रे ऽग्नेर्वैश्वानरस्येति[5] सव्ये ऽग्निस्ते जसेत्यास्ये रुक्मो वर्चसेत्यवकर्तने ॥ ५ ॥ सहस्रदा असीति[6] पुरुषशिरो ऽभिमन्त्र्या दित्य गर्भमित्युखायामुत्तानमुपदधाति पश्चादवकर्तनत ॥ ६ ॥ चित्र देवाना मित्यर्धर्चाभ्यामच्छिद्रयोर्हुत्वा पश्चात्पुरुषशिरस पुरुषचितिमुपदधाति पुरुषस्य प्रतिमाम् ॥ ७ ॥ मा छन्दे इति द्वादश पर्याया ॥ ८ ॥ तेषा तिस्रस्तिस्र एकैकेन ॥ ९ ॥ तेन छन्दसेत्यनुपजेत् ॥ १० ॥ वातस्य जूतिमिति[7] पूर्वार्धे ऽश्वशिर उत्तराभिस्तिसृभिर्यथासमाम्नातमितराणि पश्चार्धे गोशिरो दक्षिणार्धे ऽविशिर उत्तरार्धे [वस्त]शिर ॥ ११ ॥ इम मा हिंसीरिति[7] पञ्चभिरुत्सर्गैरुपधा नानुपूर्वेणोपतिष्ठेत ॥ १२ ॥ यद्येकं स्यादनुपरिहारमुपदध्याल्लोकान्वोपतिष्ठे तोत्सर्गैश्च ॥ १३ ॥ उत्तरमंसं स्वयमातृण्णायान्तरेणं सचरेदंसशिरांसि— त्वं यविष्ठेति[8] संवत्सरीं जपति[8] ॥ १४ ॥ सर्पशिर उत्तरस्मिन्नंस उपधाय नमो ऽस्तु सर्पेभ्य इति तिसृभिरनुदिशति ॥ १५ ॥ अपा त्वेमन्त्सादयामीति[9] पञ्चदशापस्या पञ्च पञ्चाभित उपदधाति ॥ १६ ॥ छन्दस्या पश्चोत्तरत ॥ १७ ॥ अय पुरोभू रिति[10] पञ्चाशत प्राणभृत· पञ्चभि पर्यायैर्दश दशैकेन ॥ १८ ॥ प्रथम दशवर्गं पुरस्तादुपदधात्यथ द्वितीय पश्चात्तृतीयं दक्षिणतश्चतुर्थमुत्तरतो मध्ये पञ्चमम् ॥ १९ ॥ आयुषे प्राण सतत प्राणापानौ सतन्विति पञ्चाशतं संयतो दशभि पर्यायै पञ्च पञ्चैकेन ॥ २० ॥ प्राची दिगित्यैतिमाना यथा प्राणभृत पञ्चाशतमुपधाय मतमुपदधाति ॥ २१ ॥

इति चयने [ प्रथमे ऽध्याये ] सप्तम खण्डम् ॥

1 MS II 7 16
2 MS II 7 17
3 MS I 3 37 43 8
4 MS II 8 3 108 11
5 MS II 13 14 163 7
6 ? Thus the ms first hand The second hand °मातृण्णायामन्तरेण (to be read as °मन्तरे न ?)
7 MS II 13 11 162 1
8 The ms सँवत्सरी यज्ञपति The entire sutra is corrupt
9 MS II 7 15 97 1
10 MS II 7 18 103 6
11 MS II 7 19 103 15
12–12 The ms °त्यथ द्वितीय तृतीय पश्चाद् द्वितीय दक्षिणत Cp II 2 1 21
13 MS II 7 20 104 16

सम्यच प्रचेताश्चाग्ने सोमस्य सूर्यस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

उग्रा च भीमा च पितॄणाँ यमस्येन्द्रस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

प्राची च प्रतीची च वसूनाँ रुद्राणामादित्याना ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

यन्त्री च यमनी च मित्रावरुणयोर्मित्रस्य धातुस्ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

ध्रुवा च पृथिवी च सवितुर्मरुताँ वरुणस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

उर्वी चाधिपत्नी च बृहस्पतेर्विश्वेषां देवानां ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

**इति वैश्वदेवीः**[1] **प्रथमा प्रतस्य** ॥ १ ॥ प्राच्या त्वा दिशा सादयामीति **पश्चात्मे-एका एकैकां लोकेषु** ॥ २ ॥ इन्द्रो दधीचो अस्थभिरिति[2] **दशाथर्वशिरो नव पूर्वार्ध एकां मध्ये** ॥ ३ ॥ **तिस्रो गायत्रीः पुरस्तादा**याहि सुषुमा हि ते **इति** ॥ ४ ॥ **रथन्तरं द्वे द्वे तिस्रः कृत्वोपदधाति**—

अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनव ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
न त्वावँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥[4]

**इति रथन्तरम्** ॥ ५ ॥ **द्वे द्वे चित्यामुपदधाति** ॥ ६ ॥

त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् ।
अस्थूरि नौ गार्हपत्यानि सन्तु तिग्मेन नस्तेजसा सँशिशाधि ॥

**इत्यृषभमुपधाय लोकंपृणया चितिँ**[5] **संछादयति** ॥ ७ ॥ **चित्यां चित्याँ हिरण्यशकलमप्यस्यति** ॥ ८ ॥ **अश्वँ श्यावमालभते** ॥ ९ ॥ पृष्ठो दिवीति[6] **चात्वालात्पुरीपमतिहृत्य व्यूहति** ॥ १० ॥ **अग्निहोमचितिहोमान्जुहोति**[7] ॥ ११ ॥ अग्ने कक्षेति[8] **पञ्चाग्निहोमाः** ॥ १२ ॥ या त इषुरिति[8] **सर्वत्रानुषजेत्** ॥ १३ ॥ **तेषामेकैकेन चित्यां चित्यां जुहोति**[8] ॥ १४ ॥ यो अप्स्वन्तरग्निरिति[8] **पञ्च चितिहोमाः** ॥ १५ ॥

1 The ms °देवी.
2 MS II. 13 6 154 9
3 MS II. 13. 9.
4 Although derived from MS ib the two verses are here given sakalapāthena
5 MS II. 13 11 161. 14.
6 MS II. 13. 12
7 The ms adds चितिहोमान एव.
8 MS II. 13. 13 162. 10.

अग्ने देवं इहावह जज्ञानो वृक्तबर्हिषे ।
असि होता न ईड्य. ॥
अगन्म महा नमसा यविष्ठं यो दीदाय समिद्ध स्वे दुरोणे ।
[ चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वत प्रत्यञ्चम् ][1] ॥
[ मेधा]कारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।
त्वामर्भस्य हविष समानमित्त्वां महो वृणते नान्यं त्वत् ॥
मनुष्वत्वा निधीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥
अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणि ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आभर ॥

इति पञ्च ॥ १६ ॥ तासामेकैकया[2] चितिं चितिमभिमृशत्यग्ने धामानीति[3] च ॥ १७ ॥ अतप्रभृत्यभिमर्शनान्तं सर्वचितिषु ॥ १८ ॥ अनूपसदमग्निं चिन्वन्ति चिन्वन्ति ॥ १९ ॥

इति चयने [ प्रथमे ऽध्याये ] ऽष्टम खण्डम् ॥

इति[4] प्रथमो ऽध्यायः ॥

---

1 Though read sakalapāṭhena the verse is from MS II 13 5 154, 1-2

2 The ms तासामेकैकां.

3 MS II 13 11 162 3

4 The ms adds चयने

अश्वं श्वेतमालभ्यान्विचतीमुपदधाति ॥ १ ॥ ध्रुवक्षितिरिति[1] पञ्चाश्विनीर्लोकेषु[2] ॥ २ ॥ उपधायर्तव्यौ उपदधाति पञ्च पञ्चोत्तराः सजूर्देवैरिति[3] पर्यायैः ॥ ३ ॥ सजूरब्दोऽयुभिरिति[4] पुरस्तात्पर्यायाणामनुषजेत्सजूर्देवैर्वयुनाधैरित्युपरिष्टात् ॥ ४ ॥ प्राणं [मे] पाहीत्यृतव्यासु वायव्या अनूपदधीतापः पिन्वेति[5] वायव्यास्वपस्याः चत्रं धर्ये इत्यपस्यासुतपश्चाद्यतस्रः पुरस्तादुपधायोत्तरैः पर्यायैः पञ्च पञ्चाभित उपदधाति[6] ॥ ५ ॥ व्याख्याताः सार्वचितिकाः ॥ ६ ॥ तृतीयामुपदधाति[7] ॥ ७ ॥ इन्द्राग्नी अव्यथमानामिति[8] स्वयमातृण्णामभिमन्त्र्य विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे[9] ॥ अन्तरिक्षं यच्छेति[10] सादयति ॥ ८ ॥ नाम्नाविद्वान्न वरदानम्[11] ॥ ९ ॥ अन्तरिक्षमाक्रमिषमिति यजमानं वाचयति ॥ १० ॥ ज्योतिरसि ज्योतिर्मे यच्छेति[12] हिरण्येष्टकां राज्ञसि प्राची दिगिति[13] पञ्च दिश्या लोकेषूपधाय रेतःसिचं रेतःसिचौ या विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति[1] विश्वज्योतिषमपराजिता नामासीति[11] मण्डलां सादयति[14] ॥ ११ ॥ आयुर्मे पाहीति[5] दश पुरस्तादुपधायोत्तरैः पर्यायैर्द्वादश द्वादशाभित उपदधाति[15] ॥ १२ ॥ मूर्धासि राडिति[5] सप्त पुरस्ताद्यन्त्री राडिति[5] सप्त पश्चात् ॥ १३ ॥ समीचीरदण्या द्वेष्यस्य ॥ १४ ॥ व्याख्याताः सार्वचितिकाः ॥ १५ ॥ चतुर्थीमुपदधाति ॥ १६ ॥ आशुस्त्रिवृदिति[16] पुरस्ताद्व्योमा सप्तदश इति दक्षिणतो भान्तः पञ्चदश इत्युत्तरतो धरुण एकविंश

1 MS II. 8. 1.
2 ! The ms लोकेपि.
3 The ms °ध्ये.
4 MS II. 8. 2
5 !
6 Based on MS III 2 9 29. 11-13.
7 The ms तृतीयामुपदधाति first hand, तृतीयां चितिं चिनोत् second hand
8 MS II. 8 3
9 MS II 7. 16 99. 10.
10 MS II. 7. 15.
11 The ms नाम्न विद्वान्वरदानं
12 MS II. 8. 9 113 5.
13 MS II. 8 14 117 9.
14 ! The ms मंगलाद्या.
15 From MS III. 2. 9 30. 5
16 MS II 8 4.
17 The ms °श्यान्त.

इति पश्चात्प्रतूर्तिरष्टादश इति षोडश शेषेणोपधायर्तव्ये उपधायैक्या स्रुवतेति[1] सप्तदश स्पृतीरुपधाय ऋतुना पत्नीति[2] पञ्चदश व्युष्टीरुपदधाति ॥ १७ ॥ व्याख्याताः सार्वचितिकाः ॥ १८ ॥ पञ्चमीमुपदधाति ॥ १९ ॥ अग्ने जातानिति[3] पश्चा च[तुश्च]त्वारिꣳशो स्तोमे इत्युत्तरतो ऽग्ने पुरीषमिति[4] मध्ये ॥ २० ॥ चत्वारिꣳशतमेवश्छन्दे इति प्रथमं दशवर्गं पुरस्तादुपदधात्यथ द्वितीयं पश्चात्तृतीयं[5] दक्षिण तश्चतुर्थमुत्तरतः ॥ २१ ॥ रश्मिना क्षयाय क्षय जिन्वेति[6] त्रयस्त्रिꣳशतं स्तोमभागाꣳश्चतुरः सप्त वर्गान्[7]दक्षिणत उपधाय पञ्च लोकेपूपदधाति ॥ २२ ॥ राज्ञ्यसि प्राची दिगिति[8] पञ्च नाकसदो लोकेषु ॥ २३ ॥ अयं पुरो हरिकेश इति पञ्चचूडाः पञ्च नाकसत्स्वध्युपदधाति पश्चात्प्राचीमुत्तमाम् ॥ २४ ॥ पुरोवातसनिरसीति[11] पञ्च वृष्टिसनयो लोकेषु सꣳयान्यावुपधायाम्बा च सुलो चेति[12] षोडश ॥ २५ ॥ येना ऋषयः[15] इति त्रिभिरनुवाकैरेकत्रिꣳशतममृतम्[16] ॥ २६ ॥ तपो योनिरित्यष्टौ ऋचा त्वा छन्दसा सादयामीति[18] च ॥ २७ ॥ दूतं[20] [ वो ] विश्ववेदसमिति[21] पञ्च ॥ २८ ॥ छन्दश्चितिमुपदधाति—अयमग्निः सहस्रिण इति तिस्रो गायत्रीः पुरस्तात् ॥ २९ ॥ तिस्रस्तिस्रो ऽभित उपदधाति । [त्रिष्टुब्भिर्] दक्षिणतः । जगतीभिः पश्चात् । अनुष्टुब्भिरुत्तरतः ॥ ३० ॥ पङ्क्तिभिः पुरस्तादुपदधाति । बृहतीभिर्दक्षिणतः । उष्णिग्भिः पश्चात् । ककुब्भिरुत्तरतः ॥ ३१ ॥

इति चयने [ द्वितीये ऽध्याये ] प्रथम खण्डम् ॥

भद्रो नो अग्निराहुतो भद्रा राति सुभगो भद्रो अध्वर ।
भद्रा उत [ प्रशस्तय ] ॥
[ भद्रा उत ] प्रशस्तयो भद्रं मन कृणुष्व वृत्रतूर्ये ।

1 MS II, 8 4
2 MS II, 8 6 110 6
3 MS II 13 10 159 14
4 MS II 8, 7.
5-5 ! The ms ०दधातीत्य द्वितीय तृतीय पश्चाद् द्वितीयं. Cp II 1 7 19
6 MS II, 8 8 112 5
7 The ms ०भागा० and वर्गा (for ०भागान् and वर्गान्)
8 MS II, 8, 9 113 5.
9 MS II 8 10 114, 13.
10 The *ms* ०सु० *first hand*, ०भ्यु० second hand, Cp MS III, 3 1 32 7.
11 The ms पुरस्ता०.
12 MS II 8 13
13 The ms सꣳयाज्या०
14 The ms ०धायावावु
15 The ms स्ये । न रुपय. (for येना).
16 MS II, 12 4 147 6
17 1
18 MS II 13, 2, 153 6
19 MS II, 13 4 153 13.
20 The ms first hand हुतं
21 MS II, 13 5 153 17.
22 MS II, 13, 7 155 13

रिति[11] ब्राह्मणव्याख्यातम् ॥ १२ ॥ आग्नेयपावमान्यां गायत्रं[12] गायति शिरसि रथन्तरं दक्षिणस्मिन्पक्षे । बृहदुत्तरस्मिन् । वामदेव्यं दक्षिणस्याँ श्रोण्याम् । पुच्छे यज्ञायज्ञियम् । प्रजापतेर्हृदयमनृचमपिपक्षे ॥ १३ ॥ अर्क्यैः सामभिरर्कं परिष्टुवन्ति[13] ॥ १४ ॥ स्तुतं होतानुशंसति ॥ १५ ॥ इष्टो यज्ञो भृगुभिरित्यग्निकं समिष्टयजुर्यजमानं वाचयति ॥ १६ ॥ अवकां वेतसशाखां मण्डूकमिति वंशे प्रबध्य समुद्रस्य त्वावकयेति[14] सप्तभिरग्निं परिकर्षति ॥ १७ ॥ प्राणो माण्डूके[15] ॥ १८ ॥ विकर्षणं संलुप्योत्करे न्यस्यति ॥ १९ ॥ कृष्णाजिनस्योपानहौ प्रतिमुच्य नमस्ते हरसे इत्यारोहति ॥ २० ॥ पञ्चगृहीत आज्ये पञ्च हिरण्यशकलान्प्रास्यं स्वय मातृण्णां पञ्च कृत्वो ऽक्ष्णया व्याधारयति—द्रुपदे वडिति[16] पर्याये ॥ २१ ॥ द्वाभ्यामुत्तम मध्ये ॥ २२ ॥ दध्ना मधुमिश्रेणाग्निं व्यवोक्षति—अन्नपते इति दर्भगुरुमुष्टिना ॥ २३ ॥ प्राणदा इत्यवरोहति ॥ २४ ॥ व्यवोक्षणान्तं कृत्वोत्तमं[17] प्रवर्ग्यानुवाक्येन गणेन पश्चार्धे चतुर्थमीदृङ् चेति[18] पञ्चममिदृक्षास इति पष्ठी मिन्द्र दैवीर्विशो इति सप्तमीम् ॥ २५ ॥ यदि कामयेत विशा क्षत्रं हन्यामिति[19] ब्राह्मणव्याख्यातम् ॥ २६ ॥

इति चयने [ द्वितीये ऽध्याये ] तृतीय खण्डम् ॥

वसोर्धारां जुहोति ॥ १ ॥ समुद्रादूर्मिरिति[20] सूक्तेन घृतमभिमन्त्र्यौदुम्बर्या महत्या स्रुचा पश्चाच्चमसः स्रुक्पात्रेण संछादितस्यं मृदाहितायामाद्यं चमस ...सिञ्चति[21] ॥ २ ॥ वैश्वानरीये धारां पातयत्यमाविष्णू सजोषसेति[22] जपित्वा ...ाम् ॥ ३ ॥ वाजश्च म इति पञ्चानुवाकान्यजमानं वाचयति ॥ ४ ॥ एका ...नवविंशतिश्चतस्रश्चाष्टौ चेति[23] चतुरभ्यासेनाष्टाचत्वारिंशत. । धेनुश्चानड्वां ...ंशेन कल्पते इति प्रभृतिना स्वर्मूर्धा स्वाहा वैयशन स्वाहा व्यशनान्त्य[24] स्वाहा- ...हा भुवनस्य पतये ऽधिपतये स्वाहेति[25] स्वर्देवा अगामामृता अभूम प्रजापते प्रजा

37 17
ग
...MS III 3 5 38 11
...17 3
...mplete
...ास्य).
...eems to be miss

11 MS I 6 2 87 13
12 The ms ॰तस्या
13 The sense of the sutra is not clear
14 MS IV 10 1 142 3
15 MS II 11 2 6.
16 The ms तिसश्चेत्य यजुरान्यथ॰
17 MS II 11. 6 143 14, 17
18 MS I. 11 3 163 13
19 MS I 11 3 व्यशयश्चान्त्य
20 MS ib

जानुदघ्नं प्रथमं चिन्वानश्चिन्वीत नाभिदघ्नं द्वितीयं चुबुकदघ्नं तृतीयं ततो न ज्यायाँसम् ॥ २१ ॥ साहस्रं प्रथमं द्विसाहस्रं द्वितीयं त्रिसाहस्रं तृतीयम् ॥ २२ ॥ संचितँ सहस्रेण हिरण्यशकलैः प्रोक्षति पञ्चधा विभज्य—सहस्रस्य मासीति[1] पर्यायैः ॥ २३ ॥ साहस्रो ऽसि सहस्राय त्वेत्यैनुपजेत् ॥ २४ ॥

इति चयने [ द्वितीये ऽध्याये ] द्वितीयं खण्डम् ॥

वसवस्त्वा रुद्रैः पश्चात्पान्त्विति घृतेन प्रोक्षति पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नुत्तरैः पर्यायैरनुक्रामन् ॥ १ ॥

नितानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु ॥

आदित्यास्त्वा पुरस्ताद्विश्वैर्देवैः पान्तु ॥

पितरस्त्वा यमराजानः पितृभिर्दक्षिणत. पान्तु ॥

देवेन्द्रस्त्वेन्द्रज्येष्ठा वरुणराजानो ऽधस्ताच्चोपरिष्टाच्च पान्तु ॥

इति मध्ये ॥ २ ॥ इमा मे अग्न इष्टका धेनवः सन्त्वित्यैभिमन्त्र्य शतरुद्रियं जुहोत्यर्कपर्णेनाजक्षीरेण गवीधुकासक्तून्कृत्वा षड्ढा विभज्योत्तरापरस्यामिष्टकायामुदङ् तिष्ठन्नात्यद्योहन्नग्निं नमस्ते रुद्र मन्यव इति प्रभृतिना नम. सेनाभ्यः सेनानीभ्यश्च वो नम इत्यन्तेन जानुदघ्ने ॥ ३ ॥ नमो रथिभ्य इतिप्रभृतिना नमो मेध्याय च विद्युत्याय चेत्यन्तेन नाभिदघ्ने ॥ ४ ॥ नमो वर्ष्याय चावर्ष्याय चेति[10] प्रभृतिना प्रत्यवरोहेभ्यस्तृतीयमास्यदघ्ने ॥ ५ ॥ नमो अस्तु रुद्रेभ्यो ये दिवीति[11] त्रीन्प्रत्यवरोहान् ॥ ६ ॥ आस्यदघ्नादीन्यजमानँ वाचयन्तेषु देशेषु जुहोति ॥ ७ ॥ असंचरे ऽर्कपर्णं न्यस्यति । यं द्विष्यात्तस्य पशूनाँ संचरे न्यस्येदिति[12] ब्राह्मणव्याख्यातम् ॥ ८ ॥ गावीधुकं चरुं पयसि शृतमुपदधाति तस्यामेवेष्टकायाँ

यो रुद्रो ऽप्सु यो ऽग्नौ य ओषधीषु ।

यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो ऽस्तु देवाय ॥

इति ॥ ९ ॥ तिसृधन्वमयाचितो[13] ब्राह्मणाय ददाति ॥ १० ॥ अश्मन्नूर्जमित्युँदकुम्भेनाग्निं त्रिः परिषिच्य त्रिः प्रतिपर्येति ॥ ११ ॥ यद्यभिचरेदेतदेव यजु

1 Nearly identical with MS III. 3. 2 34 6 sqq

2 MS II 8. 14

3 ! The ms युंजान०.

4 MS II 8. 14 118 14.

5 The ms first hand गवेधु०.

6 उदङ् is omitted by the first hand.

7 !

8-8 MS II. 9. 2-4 120. 16-124. 1.

9-9 MS II. 9. 4-7: 124. 1-125. 13

10 MS II. 9 7-9 125. 13-129 8

11 MS II. 9. 9 129. 9.

12 MS III. 3 4 37. 9.

13 ! Thus the second hand The original must have been different as the first hand reads त्रीनिपर्वतश्चान्यचितो.

14 MS II. 10. 1: 131. 1.

रिति[1] ब्राह्मणव्याख्यातम् ॥ १२ ॥ आग्नेयपावमान्यां गायत्रं[2] गायति शिरसि रथन्तरं दक्षिणस्मिन्पक्षे । बृहदुत्तरस्मिन् । वामदेव्यं दक्षिणस्याँ श्रोण्याम् । पुच्छे यज्ञायज्ञियम् । प्रजापतेर्हृदयमनृचमपिपक्षे ॥ १३ ॥ अर्क्यैः सामभिरर्कं परिष्टुवन्ति[3] ॥ १४ ॥ स्तुतं होतानुशँसति ॥ १५ ॥ इष्टो यज्ञो भृगुभिरित्याग्निकं समिष्टयजुर्यजमानँ वाचयति ॥ १६ ॥ अवकाँ वेतसशाखां मण्डूकमिति वँशे प्रबध्य समुद्रस्य त्वावकयेति[4] सप्तभिरग्निं परिकर्षति ॥ १७ ॥ प्राणो माण्डूके[5] ॥ १८ ॥ विकर्षणँ संलुप्योत्करे न्यस्यति ॥ १९ ॥ कृष्णाजिनस्योपानहौ प्रतिमुच्य नमस्ते हरसे इत्यारोहति ॥ २० ॥ पञ्चगृहीत आज्ये पञ्च हिरण्यशकलान्प्रास्यँ स्वयमातृण्णां पञ्च कृत्वो ऽक्ष्णया व्याघारयति—द्रुपदे वडिति[7] पर्यायैः ॥ २१ ॥ द्वाभ्यामुत्तमं मध्ये ॥ २२ ॥ दध्ना मधुमिश्रेणाग्निँ व्यवोक्षति—अप्सर्ते इति दर्भगुल्मुष्टिना ॥ २३ ॥ प्राणदाँ इत्यवरोहति ॥ २४ ॥ व्यवोक्षणान्तं कृत्वोत्तमे[8] प्रवर्ग्यानुवाक्येन गणेन पश्चार्धे चतुर्थमीदृङ् चेति[9] पञ्चमीमीदृक्षास इति षष्ठीमिन्द्रं दैवीर्विशं इति सप्तमीम् ॥ २५ ॥ यदि कामयेत विशा क्षत्रँ हन्यामिति[10] ब्राह्मणव्याख्यातम् ॥ २६ ॥

इति चयने [ द्वितीये ऽध्याये ] तृतीयं खण्डम् ॥

वसोर्धारां जुहोति ॥ १ ॥ समुद्रादूर्मिरिति[11] सूक्तेन घृतमभिमन्त्र्यौदुम्बर्या महत्या स्रुचा पश्चाच्चमसः स्रुक्पात्रेण संछादितस्यँ मृदाहितायामाधं चमस आसिञ्चति[12] ॥ २ ॥ वैश्वानरीये धारां पातयत्यमाविष्णू सजोषसेति[14] जपित्वाविच्छिन्नाम् ॥ ३ ॥ वाजश्च म इति पञ्चानुवाकान्यजमानँ वाचयति ॥ ४ ॥ एका च तिस्रश्च त्रयस्त्रिँशतेश्चतस्रश्चाष्टौ चेति[16] चतुरभ्यासेनाष्टाचत्वारिँशतः । धेनुश्चानड्वाँश्चेत्युँक्त्वायुर्यज्ञेन कल्पतं इति प्रभृतिना स्वर्मूर्धा स्वाहा वैयशनः स्वाहा व्यशनान्त्यः[18] स्वाहान्त्यो भौवनः स्वाहा भुवनस्य पतये ऽधिपतये स्वाहेति[19] स्वर्देवा अगामामृता अभूम प्रजापतेः प्रजा

1 MS III 3, 5 37. 17.
2 The ms गायत्र्या.
3 Identical with MS III, 3, 5. 38, 11.
4 MS II, 12, 3. 147, 3.
5 MS II 10, 1.
6 The sūtra is not complete
7 The ms प्रारां (for ॰ास्य).
8 Here something seems to be missing.
9 MS II. 11, 1.
10 MS III, 3, 10 44, 4.
11 MS I. 6, 2 87. 13.
12 The ms ॰तस्या.
13 The sense of the sūtra is not clear.
14 MS IV. 10, 1: 142, 3.
15 MS II. 11, 2-6.
16 ! The ms तिस्रश्चैत्य यजुरास्रयश्च॰.
17 MS II. 11, 6. 143. 14, 17.
18 MS I, 11. 3 163, 13
19 MS I, 11 3 व्यश्यशान्त्यः.
20 MS ib.

अभूम स्वाहेत्यन्तेन धारा ॥ ५ ॥ अग्नौ स्रुचमनुप्रहरति ॥ ६ ॥ यदाज्यमुच्छिष्यते तस्मिँश्चतुःशरावमोदनं पक्त्वा मध्यतःकारिभ्यो ददाति चतस्रश्च धेनूः ॥ ७ ॥ वाजप्रसव्यं जुहोति—वाजाय स्वाहेति[1] त्रयोदशाहुतीः[2] ॥ ८ ॥ सर्वाणि ग्राम्याण्यारण्यान्याज्येनं[3] प्रयुत्यौदुम्बरेण स्रुवेण जुहोति—अग्ने अच्छा वदेह न इत्यष्टौ[4] विश्वे नो अद्येति पर्दं[5] ॥ ९ ॥ हुत्वा हुत्वा पात्र्यां संपातानवनयत्यभिषेकाय ॥ १० ॥ अग्रेणाभिषिञ्चत्यासन्द्यां कृष्णाजिने ब्रह्मवर्चसकामं बस्ताजिने पशुकामम्॥११॥ देवस्य त्वेति बृहस्पतिमिति ब्राह्मणमिन्द्रमिति राजन्यं भवमिति वैश्यम् ॥ १२ ॥ द्वादशगृहीतेन राष्ट्रभृतो जुहोति—ऋताषाडिति[6] षड्भिः पर्यायैर्द्वे[7] पर्यायेण । स न इदं ब्रह्म क्षत्रं पात्विस्त्यनुषजेत् ॥ १३ ॥ अमृडयं इति राजन्यस्योत्तमां कुर्यात्प्रजापतिः परमेष्ठीति[8] वैश्यस्य ॥ १४ ॥ स नो भुवनस्य पतं इति रथमुखे दश ॥ १५ ॥ प्रक्षालितशिरसँ रथमध्यग्निं धारयन्ति ॥ १६ ॥ प्रत्यङ्मुखे प्रथमं द्वे द्वे दिग्वनुपरिहारं पश्चात्प्राङ्मुखे द्वितीयम् ॥ १७ ॥ ततो हुत्वाध्वर्योरावसथँ हरन्ति ॥ १८ ॥ तं दक्षिणायाः काले यजमानोऽनुदिशति ॥ १९ ॥ त्रीन्वातहोमानञ्जलिना परिग्राहं[9][10] जुहोति—समुद्रोऽसि नभस्वानिति[11] पर्यायैः ॥ २० ॥ पृष्ठ्यावर्हिःप्रभृति समानमा धिष्ण्याग्निर्वपति ॥ २१ ॥ उपेष्विष्टका दधाति[13] वैहवीरीवर्तयन् ॥ २२ ॥ अश्मनवमौ आग्नीध्र एकविँशतिँ होत्रिय एकादश ब्राह्मणाच्छँस्ये पत्रमार्जालीये ऽष्टाष्टावितरेषु ॥ २३ ॥ अग्नीषोमीयस्य पशुपुरोडाशमग्नये गृहपतये इत्यष्टौ देवस्वाँ हवीँष्यनुनिर्वपति सर्वपृष्ठयां चाग्नये गायत्रायेति[16] दशहविषम् ॥ २४ ॥

इति चयने [ द्वितीये ऽध्याये ] चतुर्थं खण्डम् ॥

श्वो भूते परिधीन्परिधायामि[15] युनज्मीति[17] दक्षिणं पक्षमभिमृशतीमौ ते पक्षावित्युँत्तरमिन्दुर्दक्षं इत्यात्मानम् ॥ १ ॥ एकयूप ऐकादशिनानुपाकरोति यद्ये-

1 MS I. 11. 3.

2 Based on MS I. 11. 8. 169. 20, III. 4 2. 46. 19.

3 ? The ms सर्वानिम्यान्यारण्यानित्याज्येन first hand, -सर्वानग्रामारण्यानित्याज्येन second hand. Cp MS III. 4. 3 47. 6.

4 ? The ms प्रसवह्योदु० first hand, प्रसह्योदु० second hand.

5 MS I. 11. 4: 164. 6 – 165. 6.

6 MS II. 12 1: 144. 4 – 15.

7 ? The ms अग्रेणदों० first hand.

8 MS II. 12. 2.

9 The ms second hand ०र्हि.

10 The ms परिग्राहन्वातं.

11 MS II. 12. 3. 145. 14.

12 ? The ms first hand ०वेप०, second hand worthless.

13 The ms first hand उपद० (for द०).

14-14 ? The ms ०रावर्तनस्य नवमा.

15 MS II. 6. 13· 72. 8.

16 MS III. 5. 10: 180. 7.

17 MS II. 12. 3.

18 The ms एके यूप एका०.

काहो भवति ॥ २ ॥ हिरण्यस्थालँ शतमानस्य मधुनः पूर्णं दक्षिणाभिः सहा-तिर्हरन्ति मन्त्रवर्गम् ॥ ३ ॥ तच्चित्रं देवानामिति यजमानो ऽग्नेदयाश्वेनाचप्राप्यं ब्राह्मणाय ददाति ॥ ४ ॥ पुरस्ताद्यद्वायक्षियस्य दिवो मूर्धासीत्यप्सुमतीभ्या-मग्निँ संमृशति ॥ ५ ॥

इमँ स्तनं मधुमन्तं धयापां प्रपीनमग्ने सलिलस्यँ मध्ये ।

उत्सं जुषस्व मधुमन्तमूर्मिँ समुद्रयँ सदनमाविवेशँ स्वाहा ॥

इति परिधिविमोकमभिजुहोति । वि ते मुचामीति च ॥ ६ ॥ समारो-पयन्यास्ते अग्ने ॥ या वो देवा ॥ रुचं नो धेहि ॥ तत्त्वायामीत्याहुतीर्जुहोति समीची नामासीति द्वे मधुर्थे ॥ स्वयं कृण्वानँ इति पञ्चभिराज्यँ हिरण्यगर्भ इत्यष्टौ हुत्वा प्रत्यवरोहति—

पुनर्मनः पुनरायुर्न आगात्पुनः प्राणः पुनराकूतमागात् ।

पुनश्चक्षुः पुनः श्रोत्रं म आगात् ॥

वैश्वानरो ऽदब्धस्तनूपा अपबाधतां दुरितानि विश्वा ।

उरुशँस मा ना आयु प्र मोपीः ॥

इति ॥ ७ ॥ दीक्षया त्वापं तपसा त्वापँ सत्यया त्वापँ वराया त्वापमवभृथेन त्वापमिति यजमानो ऽग्निमुपतिष्ठते ॥ ८ ॥ अग्निं चित्वा न रामामुपेयाद् द्वितीयं चित्वा नान्यस्य भार्यां तृतीयं चित्वा न कांचन ॥ ९ ॥ यद्युपेयान्मैत्रावरुण्यामिक्षया यजेत ॥ १० ॥ अग्निं चित्वा मैत्रावरुण्यामिक्षया यजेत सौत्रामण्या वा ॥ ११ ॥ अग्निचिद्वसोत्मीमया......तं पापं कीर्तयेर्न्न कंचन प्रत्यवरोहेत् ॥ १२ ॥ सँवत्सरं न वर्षति धावेद्यावज्जीवँ वाँ ॥ १३ ॥

ये ऽग्नय पुरीषिणा आविष्टा पृथिवीमनु ।

तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥

1 The ms दक्षिणातिसयतिह॰.

2 The ms ॰श्वेनोपरयाप्य.

3 MS II. 12. 3 146, 15

4 The ms ॰गीद्रमृ॰ first hand, ॰मिम-भिमृ॰ second hand.

5 The ms second hand सरिरस्य.

6 The ms second hand ॰विशस्व.

7 MS I. 4. 1· 48. 2

8 MS II. 7. 16.

9 MS III. 4. 8.

10 MS II. 13. 21· 166, 13.

11 The ms हौ.

12 MS II 8. 12 116, 3.

13 MS II. 13 22 167. 14.

14 MS II. 13. 23 168. 5.

15 Excepting the second line the rest is MS I. 2. 3 12 5, 6, III. 4. 8 56 8.

16 The passage is entirely damaged. The last words may be नास्य पापं कीर्तयेत् Cp KS XIX. 10 12. 8

17 ! The ms first hand यावज्जैं वा. The second hand strikes off these two words.

इति प्रोष्य स्वाग्निमुपतिष्ठते[1]—उप त्वाग्ने दिवे दिवे[2] इति तृचेनान्येषाम् ॥ १४ ॥ यदि चित्वा प्रयायाद्यमनन्तरं सोममाहरेत्तस्मिन्[3]पुनश्चितिमुपदधाति ॥ १५ ॥ अष्टौ नानामन्त्राः ॥ १६ ॥ संस्थितयोः पूर्वाह्णिक्योः प्रवर्ग्योपसदोः [ना ऋषय ][4] इत्यष्टावुपदधात्यष्टौ च लोकंपृणाः ॥ १७ ॥ पृष्टो दिवीति[5] चात्वालात्पुरीषमाहृत्य व्यूहति ॥ १८ ॥ समानमन्यत् ॥ १९ ॥ प्रथमं चिन्वानो मध्यमायां चितावुपदधाति स्तोमा नानामन्त्राः प्राग्लोकंपृणायाः ॥ २० ॥ द्वितीयं चिन्वान उत्तमायां प्राग्लोकंपृणायाः ॥ २१ ॥ यद्यग्निचिदनग्निचित्यं सोममाहरेदकविं[6]शतिमुपदधीताष्टौ नानामन्त्रास्त्रयोदश च लोकंपृणाः ॥ २२ ॥ अयं ते योनिर्ऋत्वियः[7] इत्यग्निं[8] संमृशति ॥ २३ ॥ यदि तापश्चितमाहरेत्संवत्सरं दीक्षितो भवति संवत्सरमुपसद्भिश्चरति ॥ २४ ॥ पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालम् ॥ २५ ॥ दाशतयैस्त्वाग्नेयैः सूक्तैः प्रतिसूक्तमिष्टका उपदधाति ॥ २६ ॥ अभिजिद्विश्वजिद्वा संस्था ब्राह्मणव्याख्याता ब्राह्मणव्याख्याता[9] ॥ २७ ॥

इति चयने [ द्वितीये ऽध्याये ] पञ्चम खण्डम् ॥

इति[10] द्वितीयो ऽध्यायः

---

1 Prof Caland suggests स्वमग्निमु॰ Cp KS XXII 10 67 3
2 MS I 5 3 69 3
3 ! The ms सोममाभरस्मिन्.
4 ! MS II 12 4 147. 6
5 MS II 13 11 161 14
6 MS I 5 1 66 4
7 Here something seems to be missing Cp KS XXII [illegible] 22 sqq TS V 6 5 1
8 We [illegible] not been [illegible] to [illegible]
9 T [illegible]

अथ

# वाराहश्रौतसूत्रे

## वाजपेयादिकम्

ब्राह्मणो राजन्यो वा शरदि वाजपेयेन यजेत ॥ १ ॥ षोडशिकी रा[ज]क्रयणी ॥ २ ॥ सप्तदश दीक्षास्तिस्र उपसदः ॥ ३ ॥ कृते चरे[1] दक्षिणस्य हविर्धानस्य पश्चादक्षमुपयामेभ्य. खरं करोति ॥ ४ ॥ हविर्धानगते सोमे सुरां द्रोणँ वालमित्यपरेण द्वारेण प्रपादयति ॥ ५ ॥ प्रतिप्रस्थातु. सुरायाः[2] कर्म ॥ ६ ॥ खादिरश्चतुरस्रो यूपः सप्तदशारत्निः ॥ ७ ॥ गोधूमपिष्टानां चषालँ सर्मं यूपाग्रेण ॥ ८ ॥ रशनास्थाने सप्तदशभिर्वंसाभिर्वेष्टयति ॥ ९ ॥ श्वो भूते वाजपेयसँस्था ॥ १० ॥ देव सवितरिति[3] सवनमुखेषु जुहोति ॥ ११ ॥ हिरण्यस्रज ऋत्विजः सोमैः प्रचरन्ति ॥ १२ ॥ आग्रयणस्थालीं प्रयुज्य पञ्च खादिराणि वायव्यानि पात्राणि प्रयुनक्ति ॥ १३ ॥ षोडशिपात्रं प्रयुज्य सप्तदश खादिराणि वायव्यानि सप्तदश मार्त्तिकानुपयामान् ॥ १४ ॥ अतिपाव्यमाने द्रोणे[4] वालँ वितत्य सुरामतिपावयति—पुनातु ते परिस्रुतमिति[5] ॥ १५ ॥ आग्रायणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्गृह्णाति—उपयामगृहीतो ऽसि नृषद त्वेति[6] पर्यायैः कुविदङ्गेति[6] सप्तदश प्राजापत्यानया विष्ठेति[6] सप्तदश सुरां[ग्रहान्] ॥ १६ ॥ पूर्वो ऽध्वर्युर्गृह्णाति ॥ १७ ॥ पुरो ऽक्षमध्वर्युः सोमग्रहान्सादयति पश्चादक्षं[8] प्रतिप्रस्थाता सुरोपयामान् ॥ १८ ॥ व्यत्यासं गृह्णीतः ॥ १९ ॥ पशूनुपाकरोत्याग्नेयमजमै[न्द्राग्नमजमै]न्द्रँ वृष्णिँ सारस्वतीं मेषीँ[7] सारस्वतं मेष मारुतीं पृश्निँ वशाँ सप्तदश प्राजापत्यान्श्यामाँस्तूपरानजानेकरूपान्सारस्वतीं मेषीमपन्नदतीम् ॥ २० ॥ पर्यग्निकृतानामाग्नेयप्रभृतीनां चतुर्णाँ वपाभिः प्रचरन्तीतरान्परिश्रा[य]यन्ति ॥ २१ ॥ माध्यन्दिनीयान्सवनीयाननु

1 ? To be emended to खरे ?

2 The ms सुराया.

3 MS I 11 1 161 7

4 ? The ms ॰मार्ने द्रोण first hand, मण द्रोण second hand

5 MS II 3 8 35 17

6 MS I 11 4

7 The ms सुरा

8 Sutras 17 and 18 are only tentatively put above The ms first hand पर्याध्वर्यु सानुगृहीतो सुरोपयामे ऽध्वर्यु समग्रह सादयत्यपरु॰ The second hand is worthless

नैवारं चरुं निर्वपति बार्हस्पत्यँ सप्तदशशरावम् ॥ २२ ॥ औदुम्बर्या स्रुचा त्रियं-जुषा तूष्णीं चतुर्थे पयसि शृतं पात्र्यामुद्धृत्य चात्वाले ऽवदधाति ॥ २३ ॥ दक्षिणाकाले दक्षिणतः पुरस्तात्प्राग्वँशस्य वाजस्य नु प्रसवे इति रथमुपावहरति ॥ २४ ॥ अप्स्वन्तरमृतमित्यश्वान्स्नपयन्ति[1] ॥ २५ ॥ वायुर्वा त्वेति[2] युनक्ति[3] ॥ २६ ॥ अपां नपादाशुहेमन्निति[1] रराटानि प्रतिमार्ष्टि[2] ॥ २७ ॥ प्रष्टिवाहिनँ रथँ युञ्जन्ति तूष्णीँ षोडशेतरान् ॥ २८ ॥ सप्तदश ददाति सप्तदश हस्तिनः सप्तदश दासी-र्निष्ककण्ठीः सप्तदश गवां शतानि[3] दश सप्तदशानि प्रकृतीनाँ युक्तं दक्षिणानाम्[4] ॥ २९ ॥ रथाँस्तीर्थान्ते[5] ऽवस्थापयन्ति ॥ ३० ॥ माहेन्द्रकाले[6] वेदिस्रक्तिषु दुन्दु-भीनवघ्नन्ति ॥ ३१ ॥ रथाक्षं चात्वाले निघ्नन्ति ॥ ३२ ॥ तस्मिन्नथचक्रं मुञ्जत्यौ-दुम्बरँ सप्तदशारम् ॥ ३३ ॥ सप्तदशोपपुटानश्वत्थपर्णपूपनद्धाँश्चतुरश्चतुरः पञ्चै-कस्मिन् ॥ ३४ ॥ उत्तरतः पुरस्तात्सप्तदशस्विपुदेपेष्वौदुम्बरीं काष्ठां निघ्नन्ति ॥ ३५ ॥ प्रस्तुते[7] माहेन्द्रस्य स्तोत्रे देवस्य सवितुरिति[8] ब्रह्मा रथचक्रँ सर्पति ॥ ३६ ॥ आरुह्य वाजसाम गायति ॥ ३७ ॥ चक्रमावेष्टयति ॥ ३८ ॥ विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि विष्णोर्विक्रमणमसीति पर्यायैर्यजमानस्त्रीन्क्रमान्क्रमते रथाय व्रजन् ॥ ३९ ॥ देवस्य वयमिति[9] यजुर्युक्तमारोहति ॥ ४० ॥ अग्निरेकाक्षरामित्युज्जितीर्यजमानँ[10] वाचयति ॥ ४१ ॥ वाजिनौ वाजजिताविति[11] युग्यौ[12] नैवारमवघ्रापयति ॥ ४२ ॥ उत्तरेण पर्यायेणँ प्रप्रोथेषु लेपान्निर्मार्ष्टि[14] ॥ ४३ ॥ अवरोहति यजमानः ॥ ४४ ॥ राजभव्यः पुत्रः प्रतिहित आजिं धावति ॥ ४५ ॥

इति वाजपेये [ प्रथमे ऽध्याये ] प्रथमं खण्डम् ॥

अङ्क्षौ न्यङ्क्षावभितो रथँ ये ध्वान्ता वाता अग्रमभि ये संपतन्ति ।
दूरेहेतिः पतत्री वाजिनीवाँस्ते नो अग्नयः पप्रय. पारयन्तु ॥

इति चक्रमभिमन्त्रयते ॥ १ ॥ अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्समत्सु चोदयेति काशामादायावासि सप्तिरसीत्यश्वान्संक्षिपति ॥ २ ॥ विश इतराः प्रेह्वाना

1 MS I 11. 1.
2 Identical with MS I. 11. 6 168 3-6
3 ? The ms द्वादशानि.
4 The last five words do not yield any sense.
5 ? The ms रथाँस्तीर्त्वा.
6 The ms महेन्द्र॰.
7 ? The ms प्रश्नते
8 MS I. 11. 7. 168. 11, 15
9 The ms वज॰ first hand, वाजि॰ second hand.
10 MS I. 11. 10 171. 14
11 MS I 11 3 163 11
12 The ms युग्यै.
13 MS ib 12
14 The ms first hand लेपन निमा॰.
15 MS III. 12. 4. 161. 10.

रोहन्ति ॥ ३ ॥ तैः सहाजिं धावति ॥ ४ ॥ वाजं वाजिनो जयतेति[1] यजुषा ॥ ५ ॥ चतसृभिर्धावति ॥ ६ ॥ रथा आवर्तन्ते[3] । प्रदक्षिणं काष्ठां कृत्वायन्ति[4] ॥ ७ ॥ आ मा वाजस्येत्येतया[ग]तेषु जुहोति ॥ ८ ॥ प्रतिरथं कृष्णलान्याहरन्ति ॥ ९ ॥ हिरण्यस्थालँ[6] शतमानस्य मधुनः पूर्णं ब्रह्मणे ॥ १० ॥ इन्द्राय वाचँ वदतेति[5] दुन्दुभीनाघ्नन्ति ॥ ११ ॥ इयँ वः सा सत्येत्येन्द्राय वाचँ विमुच्यध्वमिति[5] रथविमोचनीयं जुहोति ॥ १२ ॥ तेन धर्मेण युग्यौ नैवारमवघ्रापयति ॥ १३ ॥ दर्भमयँ वासः पत्नी परिधत्ते तार्प्यं[7] यजमानः क्षौमँ यूपे सर्पिषि वा पर्यस्तम् ॥ १४ ॥ स्वो रोहावेति[5] यजमानः पत्नीमामन्त्रयत एहीति[5] पत्नी तैरेतेन धर्मेण ॥ १५ ॥ अहं नावुभयो रोहयामी-त्युक्त्वायुर्यज्ञेन कल्पतें इति यजमानो यूपमारोहति ॥ १६ ॥ अन्नाय त्वा वाजाय त्वेति[5] विश ऊषपुटैर्यजमानमर्पयन्ति पुरस्तात्प्रत्यञ्चम् ॥ १७ ॥ यो यः पर्येति तं तमभिपर्यावर्तेत ॥ १८ ॥ स्वर्देवा अगामेत्यूर्वाण्यधिरिम्रिनयति[9] ॥ १९ ॥ अग्ने अच्छा वदेह नें[10] इति सप्तभिरन्नहोमाञ्जुहोति ॥ २० ॥ अग्नया एकाक्षराय छन्दसे स्वाहेत्येनुवाकशेषेण[11] यजमानमवरोहयति ॥ २१ ॥ इयं ते[12] राडिमनस्य यन्तासि यमनो धर्तासि धरुणो रय्यै पोषाय कृष्यै क्षेमायेत्यवरोहन्तमनुमन्त्रयते ॥ २२ ॥ कृष्णाजिनमासन्द्यामास्तृणाति वस्ताजिने रुक्मँ शतमानम्[13] । तेजो ऽसीति रुक्मे पादमादधाति पुष्टिरसि प्रजननमसीति वस्ताजिने ॥ २३ ॥ दिवं प्रोष्ठनीमारोह तामारुह्य प्रजयैकराएमनुष्याणामित्यारोहन्तमनुमन्त्रयते ॥ २४ ॥ तेन धर्मेण परिषिञ्चति ॥ २५ ॥ अत्रैवास्य श्वेतं छत्रं धारयन्त्याजिसरेण वाँ ॥ २६ ॥ परिधानीयाँ संपाद्य माहेन्द्रेण प्रचरत्यैन्द्रैश्चातिग्राह्यैः ॥ २७ ॥ उपाकृते ब्रह्मसाम्नि सरस्वतीप्रभृतीनाँ वपाः सँस्कुर्वन्ति ॥ २८ ॥ प्रायाजिकस्याज्यशेषेणाभिघारयन्ति ॥ २९ ॥ ब्राह्मणाछँसिचमसैः प्रचर्य सहमाजापत्यमपन्नदत्या वपया प्रचर्य नैवारेण प्रचर्य पशुपुरोडाशैः प्रचरति ॥ ३० ॥ सहस्विष्टकृदिडं नैवारस्य पशुपुरोडाशानां च ॥ ३१ ॥ पशुकाल इतरैः पशुभिः प्रचरति ॥ ३२ ॥ वनस्पतिस्विष्टकृदिडमिति[15] परिशा[य]यन्ति ॥ ३३ ॥ षोडशिचमसैः प्रचर्य होतृचमसमुख्यान्वाजपेयचमसानुन्नयति ॥ ३४ ॥ स्तुत-

1 MS I, 11, 2. 162, 8.
2 Ib 10 sqq
3 ! The ms स्तामावर्तते.
4 ! The ms काष्ठान्कृत्वायन्.
5 MS I, 11, 3.
6 The ms स्थले first hand, स्थाली second hand, But cp MS I, 11, 7. 169, 12.
7 ! The ms ताप्यमयँ.
8-8 ! The ms °पर्यावर्जयेयुः देवाः.
9 Hopelessly corrupt.
10 MS I, 11, 4. 164, 6.
11 MS I, 11, 10 173, 2.
12-12 ! The ms °शेषेणायमवरोहयति यजमानो यं ते.
13 ! The ms first hand शतमानस्याराहं.
14 !
15 The ms °दिडामिति.

शस्त्रवन्तः ॥ ३५ ॥ संपृच स्थ स मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति। विपृच स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहै[1] ॥ ३६ ॥ पश्चा द्धविर्धानस्य निदधाति ॥ ३७ ॥ ग्रहचमसैः प्रचरन्ति ॥ ३८ ॥ [उ]पोषन्त्यन्ति सुरोपयामान् ॥ ३९ ॥ भक्षयन्ति चमसान् ॥ ४० ॥ उपरि स्थापयन्ति ग्रहान् ॥ ४१ ॥ सारस्वतप्रभृतिभिर्मूर्ध्नि प्रचरन्ति ॥ ४२ ॥ सहस्विष्टकृदिडं पूर्वेषां च ॥ ४३ ॥ उपहूतायामिडायाँ वशायां यान्यवदानीयान्यङ्गानि तान्यृत्विग्भ्यो हरन्ति सोमग्रहाँश्च[2] यान्यनवदानीयानि तान्याजिसृग्भ्य. सुरो[पयामाँश्च] पर्याका जनीनां प्रतिहित प्रस्तन्ति[3] ॥ ४४ ॥ न वाजपेययाजी कंचन प्रत्यवरोहेन्न प्रत्युत्ति ष्ठेत् ॥ ४५ ॥ यदि प्रत्यवरोहेत्प्रत्युत्तिष्ठेद्वा बृहस्पतिसवेन यजेतेन्द्रसवेन राजन्य ॥ ४६ ॥ सम्राडित्येनमाचक्षीरन् ॥ ४७ ॥

इति वाजपेये ( प्रथमे ऽध्याये ) द्वितीय खण्डम् ॥

इति[4] प्रथमो ऽध्याय. ॥

---

1 The ms °ही.
2 The ms ग्रहाँश्च
3 Hopelessly corrupt.
4 The ms adds वाजपेये

इष्टिप्रथमयज्ञानां द्वादशाहे ऽहीनस्यापि वा सत्त्रे गृहपतिरेवेष्टप्रथमयज्ञः ॥ १ ॥ ब्राह्मणानाँ सप्तदशानाँ सतामेको गृहपतिः षोडश ऋत्विजो यजमानां· श्चैव कर्त्र्यार्थे ॥ २ ॥ पक्रप्रभृतीनां श्रेय सँस्तृतोद्दिनोदंकितो याजयन्ति ॥ ३ ॥ अग्नँ हि तेनें ॥ ४ ॥ सावित्राणि होष्यन्तो[5] गृहपतेरग्निष्वग्नीन्संनिवपन्ते ब्रह्मा होताध्वर्युरुद्गाता तत्पुरुषाश्चैतेनानुपूर्व्येण ॥ ५ ॥ भवत न समनसावित्ति[6] जपति यो निवपति येन येनार्यँ हुत्वाधिनिवपन्ते[7] ॥ ६ ॥ पञ्चपशूनाँ यक्ष्यमाणानामेको ऽग्नि.[10] ॥ ७ ॥ तेभिरिष्ट्वौ विनिवपन्ते ॥ ८ ॥ दीक्षिष्यमाणाः [सं]निवपन्ते ॥ ९ ॥ चैत्रपक्षस्य सप्तम्यां दीक्षन्ते ॥ १० ॥ द्वादश दीक्षा द्वादशोपसदो ऽमावास्याँ यज नीये ऽहनि वौ ॥ ११ ॥ गृहपतिमुख्यान्मध्यत.कारिणो ऽध्वर्युर्दीक्षयते प्रति· प्रस्थाता पत्नीः ॥ १२ ॥ अध्वर्युमुख्यानार्धिन. प्रतिप्रस्थाता नेष्टा पत्नीः ॥ १३ ॥ प्रतिप्रस्थातृमुख्यान्तृतीयिनो नेष्टोन्नेता पत्नी ॥ १४ ॥ नेष्टृमुख्यान्पादिन उन्नेता ॥ १५ ॥ स एव पत्नी. ॥ १६ ॥ अदीक्षित उन्नेतारमध्युन्दनेन समेत्य पर्यञ्जनेन समीयात् ॥ १७ ॥ एवँ समानजातीयेन तृणान्तर्धानेन सर्वाननुक्रा· मति[5] ॥ १८ ॥ दीक्षिता इमे ब्राह्मणा इति सर्वानावेदयति ॥ १९ ॥ नामगोत्राण्यु· क्त्वा त इन्द्राग्निभ्यां दीक्षा प्राहुरित्याह ॥ २० ॥ प्रवरणवेलायाँ सकृदाश्राव्य सर्वा न्वृणीते । समार्षेयाणाँ समाननामधेयानां च सकृद्वचनम् ॥ २१ ॥ कर्मणो ऽवि· प्रतिपिद्धेन सर्वे याजमानं कुर्वन्ति पराङ् गृहपतिरेव यथा यूपाञ्जनमग्निमन्थ नमग्निपरिमाणँ याज्येति ॥ २२ ॥ दीक्षिता सर्वतो यजमाना इति गमयन्ति ॥ २३ ॥

1 The ms first hand प्रमहिन•

2 The ms •मान•

3 ? To be emended to चैककार्यार्थ ?

4-4 Hopelessly corrupt

5 ?

6 The ms •न्ते Cp Āp XXI 2 12

7 The ms second hand •पूर्व्येण

8 MS I 2 7 16 8

9 The sūtra is partly unintelligible.

10 The ms •माणोमेकोर्मि first hand, •माणामेकोर्मि second hand.

11 ? The ms चम इष्ट्वा

12 In place of वा the ms यसुवो first hand, यसवो second hand

एकँ रुक्मँ सर्वे प्रतिमुञ्चन्ति तिव्यपासं[1] च क्रमान्क्रामन्ति ॥ २४ ॥ वर्हुं राजानं क्रीणाति ॥ २५ ॥ षोडशिकी[2] राजक्रयणी ॥ २६ ॥ अतिग्राह्याणां प्रयुक्ते ऽग्रायणं पात्रप्रयोजनं प्रातःसवने ग्रहणं च माहेन्द्रमनु होमः ॥ २७ ॥ प्रायणीयो ऽतिरात्र प्रथमसँस्था ॥ २८ ॥ द्वादशभागं राज्ञो ऽवहरति ॥ २९ ॥ नित्येन मित्वा

वायुरसि प्राणो नाम सवितुराधिपत्ये ऽपानं मे दा ॥
चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दा ॥
रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजा मे दा ॥
ऋतमसि सत्य नामेन्द्रस्याधिपत्ये क्षत्रं मे दा ॥
भूतमसि भव्य नाम विश्वेषा देवानामाधिपत्ये ऽपामोषधीना गर्भं धा ॥

ऋतस्य त्वा व्योमन ऋतस्य त्वा विभूमन [ ऋतस्य त्वा सत्याय ] ऋतस्य त्वा विधर्मण ऋतस्य त्वा ज्योतिष इति दश सप्त त्रय. ॥ ३० ॥ तासु द्वाभ्यां मिमीते । द्वितीय नित्येन मित्वाय पुरा भूरिति[3] पञ्चमी ॥ ३१ ॥ प्राणग्रहपर्यायाणां प्रथमेन मिमीते— प्रजापतिगृहातिर्[4] त्वया प्राणं गृह्णामीत्येतेन धर्मेण व्यत्यासं प्रायणीयोदयनीययोर्दशमे चाहनि ॥ ३२ ॥ यथाकालमुत्तरस्मिन्नहनि वत्सानपाकरोति ॥ ३३ ॥ अदक्षिणानि सत्राणि ॥ ३४ ॥ द्वादशशतं दक्षिणा अहन्यहन्यहीने[5] ॥ ३५ ॥ सत्रे तु दाक्षिणौ होमौ हुत्वाहरहः कृष्णाजिनानि धूत्वा[6] दक्षिणापथेन व्रजन्ति—इदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय [ ददामीति[7] ] ॥ ३६ ॥ पत्नीसँयाजान्तान्य हान्योत्तरस्मादह्नः ॥ ३७ ॥ पुरस्ताद्यज्ञायज्ञियस्य वसतीवरीर्गृह्णाति ॥ ३८ ॥ हारियोजनातिप्रैषप्रेषित आग्नीध्रस्तिष्ठन्सुत्यामावेदयति—इन्द्राग्निभ्याँ श्व सुत्यां प्रब्रवीमि मित्रावरुणाभ्याँ विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्य सोमेभ्य सोमपेभ्यो ब्रह्मन्वाचं यच्छेति ॥ ३९ ॥ [ ब्रह्मा वाचं ] यच्छत्या वसतीवरीणां परिहरणात् ॥ ४० ॥ अन्वह पृष्ठ्यँ षडहमुपयन्ति[8] ॥ ४१ ॥ वसतीवरीः परिहृत्य त्रिवृतमग्निष्टोममुपयन्ति रथन्तरपृष्ठम् ॥ ४२ ॥ माहेन्द्रकाले रथँ शब्दवन्तं बहिर्वेदि दक्षिणतो व्यतिवर्तयन्ति ॥ ४३ ॥ श्वो भूते पञ्चदश उक्थ्यो बृहत्पृष्ठः ॥ ४४ ॥ माहेन्द्रकाले दुन्दुभिमाघ्नन्ति ॥ ४५ ॥ श्वो भूते सप्तदश उक्थ्यो वैरूपपृष्ठ. ॥ ४६ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्धिधुँसुद्गात्रे प्रयच्छति ॥ ४७ ॥ श्वो भूत एकविँशः षोडशी वैराजपृष्ठ ॥ ४८ ॥

1 ! Thus the ms
2 The text is corrupt
3 MS II 7 19 103 15
4 But the Samhitā (ib 104 2) •गृहीतया
5 ! The ms दक्षिणान्यहन्यहीने
6 The ms धून्वा वा
7 The ms second hand has instead नयामीति (after Āp)
8 The ms •न्युत्त•
9 The ms second hand •यशीय
10 The ms तिष्ठ (for तिष्ठन)
11 The ms पनयति (for उपयन्ति)
12 The word, though corrupt, should mean "a fan".

अमा आयूंषि पवस इत्याग्नेयमतिग्राह्यं गृह्णाति ॥ ४९ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्नरणिशकलमुद्गात्रे प्रयच्छति ॥ ५० ॥ उद्गातुरूरावग्निं मन्थन्ति ॥ ५१ ॥ समाप्ते स्तोत्रेऽध्वर्युर्भवतं न. समनसावित्यनुप्रहृत्य प्रेद्धो अग्न इत्यभिजुहोति[4] ॥ ५२ ॥ न्यूङ्खयमूर्ध्व[5] भवति ॥ ५३ ॥ अग्नेय त्वा ब्रह्मणश्चेत्यतिग्राह्यँ हुत्वाग्न आयुष्करोति[6] भक्षयति ॥ ५४ ॥ मयि मेधा मयि प्रजां मय्यग्निस्तेजो दधात्वित्यात्मानं प्रत्यभिमृशति ॥ ५५ ॥ मयीन्द्र ओजो दधातु मयि सूर्यो भ्राजो दधात्वित्युत्तरयोः ॥ ५६ ॥ श्वो भूते त्रिणव उक्थ्यः शाक्वरपृष्ठः ॥ ५७ ॥ ओजस्तदस्य तित्विषे इत्यैन्द्रमतिग्राह्यं गृह्णाति ॥ ५८ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्तोयावकमुद्गात्रे प्रयच्छति ॥ ५९ ॥ इन्द्रस्य च त्वा वृत्रस्य चेत्यतिग्राह्यँ हुत्वेन्द्रौजस्करोति[7] भक्षयति ॥ ६० ॥ श्वो भूते त्रयस्त्रिँश उक्थ्यो रैवतपृष्ठः ॥ ६१ ॥ अदृश्रन्नस्य केतवे इति सौर्यमतिग्राह्यं गृह्णाति ॥ ६२ ॥ ऋतव्यापात्रेण स्वयमृतुमँहख्यवधानेति[13] यजत्यध्वर्युः ॥ ६३ ॥ यजत्युक्ते ऽध्वर्युर्यजते ॥ ६४ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] प्रथमं खण्डम् ॥

ये यजामहे ॥ अश्विनाध्वर्यू आध्वर्यवात् ॥ ऋतुना सोमं पिबतम् ॥
अश्विना पिबतं मूनं दीद्यग्नी शुचिव्रता ।
ऋतुना यज्ञवाहसा ॥

इति समूढेषु ॥ १ ॥ अव्यूढे सलिलं गार्त्स्नुयं[14] द्वितीयं कुर्वीत ॥ २ ॥ माहेन्द्रस्य काले प्रसदसि[15] वत्सगर्वो साँवाशिनं[16] कुर्वीत ॥ ३ ॥ सूर्यस्य च त्वौषधीनां चेत्यतिग्राह्यं हुत्वा सूर्य भ्राजस्करोति[17] भक्षयति ॥ ४ ॥ [तृतीय]सवने वालखिल्यान्मैत्रावरुणो विहरति—वृषाकपिं ब्राह्मणाच्छंसी शँसेत्येवयामरुतमच्छावाकः शिक्त्ये[14] प्रतिगरः ॥ ५ ॥ समाप्ते ऽहनि वाचँ यच्छन्त्या रसप्राशनात् ॥ ६ ॥ दीक्षिताः प्राश्नन्ति मधु ॥ ७ ॥ अहीने दीक्षितः ॥ ८ ॥ सँस्थिते पृष्ठ्यषडहे छन्दोमानुप-

1 MS I. 3 31
2 MS I 2 7, 16 8
3 MS II 10 6 139. 5
4 The ms इत्याह जुहोति
5 The ms inserts भत before ऊर्ध्व.
6 MS IV. 7. 3 96 6, 7, 11 (•कार for our •वर).
7 The ms आयुस्तेति. See MS ib 10
8 MS I 3. 32
9 The ms श्वो भूते मा•.
10 The ms करिष्यन्तयोरवक्रामिति मु•.
11 MS I 3 33
12 ? The ms पृथि•, ऋतव्यापात्र is perhaps the same as ऋतुपात्र.
13 Hopelessly corrupt.
14 ?
15 We expect the word to mean "outside the sadas"
16 ? The ms वत्सात्वथसानासिनं.
17 Cp MS IV 7 3 96 9, 13.

यन्ति ॥ ६ ॥ त्रीण्युक्थ्यानि ॥ १० ॥ बृहत्पृष्ठावभितो मध्ये [रथन्तरपृष्ठ ] ॥ ११ ॥ रथन्तरपृष्ठश्चतुर्थः ॥ १२ ॥ अविवाक्यं नाम स्मरन्ति ॥ १३ ॥ प्रन्यतिशिल्पे ब्रह्मा गृहपतिरुपद्रष्टा वा चित्रतया तु या वाहिरक्षरं व्यञ्जनैस्तानि होता परो क्षमनुष्टुभं संपादयेत् ॥ १४ ॥ समाप्ते ऽहन्याहवनीयमुपतिष्ठन्ते—

अयँ सहस्रमनवे दृश कवीना मतिर्ज्योतिर्विधर्म ।

ब्रध्न समीचीरुषस समैरयत् ॥

अरेपस सचेतस स्वसरे मन्युमन्ताश्चितौ गौर्गौ ॥

इति ॥ १५ ॥ निधनमुपयन्ति ॥ १६ ॥ हविर्धाने मानसं ग्रहं गृह्णाति—पृथिव्या पात्रेण समुद्रँ रसामनुपयामगृहीतो ऽसि[5] प्रजापतये त्वा जुष्ट गृह्णामीति ॥ १७ ॥ स्तुतशस्त्रवान्भवति ॥ १८ ॥ आसादनभक्षणं[5] मनसा कुर्वीत ॥ १६ ॥ परिधानीयाँ संपाद्याभिमुखो होतारमुपविशति ॥ २० ॥ आमन्त्रयते होता—अध्वर्यो ब्रह्म वदिष्याव उच्चैस्तराँ होतरित्यध्वर्युः ॥ २१ ॥ चित्ति सुर्गध्वर्यो होता चित्तमाज्य मध्वर्युरामन्त्रयते होतर्ब्रह्म वदिष्याव इत्युच्चैस्तरा तथाध्वर्यो इति तिष्ठति ॥ २२ ॥ ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षम् । यजेति द्व्यक्षरम् । ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कार । एष वै होत[8] प्रजापति सप्तदश ॥ २३ ॥ उपयथा होता येषाँ वै होत[8] प्रजापतिः सप्तदशो यज्ञे ऽन्वायत्तः ॥ २४ ॥ यद्य नुवाक्याया एति यदि याज्याया अतश्चेदेव नैति । नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति[9] ॥ २५ ॥ अरात्स्म होतरिति ॥ २६ ॥ एतेन धर्मेण चतुर्होतृना चष्टे ॥ २७ ॥

अर्वाग्धमद्य यथ्य नृवाहणँ रथँ युञ्जाथामिह वाँ विमोचनम् ।

पृङ्क्तँ हवीँषि मधुना हि क गतमथा सोम पिबतँ वाजिनीवसू ॥

इति गृहपते यजेत्युक्ते गृहपतिर्यजति— ये यजामहे ॥ अग्निँ गृहपतिं गार्हपत्यात् ॥ सुगृ हपतिस्त्वयाग्ने ऽयँ सुन्वन्यजमान स्यात्सुगृहपतिस्त्वमनेन सुन्वता यजमानेन॥ अग्निर्गृहपतिर्गार्हपत्या दृतुना सोम पिबतु गार्हपत्ये ऽनु समृतुना॥ अयँ हि गौरसि॥ देवायेते यजेति समूढेष्वव्यूढे गायति[10] ॥ २८ ॥ यदि त्वाद्यपतेभ्यश्च स्वर्यति नैषाँ यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति

1 1

2 The passage is for the major part unintelligible

3 The ms स्वरेस्वतारेसवमनाश्रिता

4 The mantra is corrupt The only other known version is Āp XXI 10 2

5 1 The ms भक्षयरयामक्षण

6 MS I 9 1 131 1

7 Not in the Saṃhitā

8-8 Our text is corrupt For उप हात the Saṃhitā has एष वै

9 Sūtras 23 24, 25 are from MS I 4 11 59 20—60, 3

10 There is great confusion in this sutra

॥ २६ ॥ अपारस्म होतरित्यन्तमुच्चैरोमध्वर्यो तथाध्वर्यो इति प्रतिचारैः[1] ॥ ३० ॥ ग्रहेण प्रचर्य ग्रहशेषं प्रजापतिपीतं भक्षयन्ति ॥ ३१ ॥ तार्तीयसवनिको भक्षमन्त्रः ॥ ३२ ॥ यत्संमीक्षते स उपहवः ॥ ३३ ॥ उप स्वजा वर्षमित्यौदुम्बरीमन्वारभन्ते ॥ ३४ ॥ वागैतु वागुपैतु वाक्समैतु मैतु वाक् ॥ भूर्भुवः स्वरित्यन्वारभ्य वाचँ यच्छन्त्याधिवृक्षसूर्यादा वा नक्षत्रदर्शनात् ॥ ३५ ॥ वाचँ विसृज्याग्नीध्रीयमुपतिष्ठन्ते—

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतँ वज्रेण तं तमिद्धतम्।
दूरे चत्ताय छन्त्सद्गहनँ यदिनक्षत्।
अस्माकँ शत्रून्परि शूर विश्वतो दर्मा दर्षीष्टे[4] [विश्वतः] ॥

इति श्वो भूत उदयनीयो ऽतिरात्रः ॥ ३६ ॥ स प्रायणीयेन व्याख्यातः ॥ ३७ ॥ होता कर्माणि[5] कुरुते ॥ ३८ ॥ समूढं चेदैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः। इतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथाग्रायणाग्रमिति त्रिरभ्यस्य ॥ ३९ ॥ व्यूढस्यैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ। इतरेषां दशानामैन्द्रवायवाग्रं प्रथममहः। अथ द्वे आग्रायणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाग्रायणमथ द्वे ऐन्द्रवायवाग्रे ॥ ४० ॥ व्यूढस्यैतस्मिन्पृष्ठ्ये षडहे[6] ॥ ४१ ॥ छन्दोगानां[7] जगत्यः प्रातःसवनं भजन्ते गायत्र्यो माध्यन्दिनं त्रिष्टुभस्तृतीयसवनम्। [8]छन्दोभिरव्यूढेनानुष्टुभः[8] प्रातःसवनं भजन्ते जगत्यो माध्यन्दिनं गायत्र्यस्तृतीयसवनम् ॥ ४२ ॥ पवमानाभिमन्त्रणं भक्षणमिति यथाछन्दः ॥ ४३ ॥ कृष्णशीर्षाग्नेय इत्यैकादशिनाः[10] ॥ ४४ ॥ तानन्वहँ विहृतानालभन्ते ॥ ४५ ॥ [11]अजमाग्नेयमुदयनीयः[11] ॥ ४६ ॥ उदवसानीयाभिरिष्ट्वा ज्योतिष्टोमैः पृष्ठशमनीयैरतिरात्रैर्यजेरन् ॥ ४७ ॥ पृष्ठ्यव्यसने[13] पृथगवसानीयाभिरिष्ट्वा ज्योतिष्टोमेन यजेरन् ॥ ४८ ॥ द्वादशाहेन सत्राहीना व्याख्याताः ॥ ४९ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] द्वितीयं खण्डम् ॥

1 ! To be emended to प्रतिगरः !

2 The ms यस्त॰.

3 ! Perhaps to be emended to उपसृजन्धरुणम्.

4 The ms दर्मा दर्षंट.

5 ! Perhaps to be emended to वरन कर्माणि.

6 ! The ms षष्टषडेहे first hand, षष्टषाहे second hand.

7 Probably to be emended to छन्दोमानां.

8-8 ! The ms छंदोभि र्कि व्यूढेनानान्नुष्टुभ first hand, छंदोभिरव्यूढेनानुष्टुभः second hand.

9 ! The ms पवमानाभि॰.

10 For the entire list see MS IV. 7. 8; 103. 7-9.

11-11 ! The ms अजमाग्नेय इत्यस्यादवासा॰ first hand, अज आग्नेय इयुदवा॰ second hand.

12 The ms पृष्ठैमै. दशनीये तिरात्रै.

13 !

गवामयनम् ॥ १ ॥ पौर्णमास्याश्चतुरहे पुरस्तादीक्षन्ते ॥ २ ॥ तामिस्रस्या ष्टम्यामृत्विग्भ्यो[1] अग्निष्टोमस्य पञ्चम्यां प्रसव ॥ ३ ॥ समान प्रायणीय ॥ ४ ॥ उक्थ्यो द्वितीयमहरग्निष्टोमो वा ॥ ५ ॥ अन्वहमभिप्लवं षडहमुपयन्ति ॥ ६ ॥ ज्योतिरग्निष्टोमो रथन्तरपृष्ठो गौरुकथ्यो बृहत्पृष्ठ आयुरुकथ्यो रथन्तरपृष्ठ पुन र्गोआयुषी ज्योतिरग्निष्टोमो रथन्तरपृष्ठ एव[2] ॥ ७ ॥ चतुरो ऽभिप्लवानुपयन्ति ॥ ८ ॥ पृष्ठ्यः । स मास ॥ ९ ॥ तांश्चतुरो मासानुपयन्ति ॥ १० ॥ त्रयो ऽभिप्लवा पृष्ठ्यो ऽभिजित्स्वरसामान उक्थ्या वाग्निष्टोमा वा ॥ ११ ॥ तेष्ववृत्ता सतति[3] ॥ १२ ॥ अतिग्राह्य गृह्णाति ॥ १३ ॥ उपयामगृहीतो ऽस्यद्भ्यस्त्वौषधीभ्य इति गृहीत्वाद्भ्य औषधीभ्य स्वाहेति प्रथमे ऽहनि जुहोति ॥ १४ ॥ ओषधीभ्यस्त्वा प्रजाभ्य इति गृहीत्वौ षधीभ्य प्रजाभ्य स्वाहेति द्वितीये ॥ १५ ॥ प्रजाभ्यस्त्वा प्रजापतय इति गृहीत्वा प्रजाभ्य प्रजापतये स्वाहेति तृतीये ॥ १६ ॥ स मास[4] । स पूर्व. [पक्ष] ॥ १७ ॥ श्वो भूते विषु वान्दिवाकीर्त्यो ऽग्निष्टोम ॥ १८ ॥ उदिते प्रातरनुवाकमुपाकरोति ॥ १९ ॥ अवृत्तान्सततीन्गृहीत्वोदु त्य जातवेदसमिति[6] स्तोत्र आदित्यँ वृत्तान्सततीन्गृहीत्वा वाचस्पतिमिति वैश्वकर्मणमिति[7] ॥ २० ॥ आदित्यँ श्वो भूते वैश्वकर्मणँ व्यत्यास गृह्य त्या महाव्रतात् ॥ २१ ॥ उभे महाव्रते ॥ २२ ॥ सौर्यँ[8] श्वेतमजँ सवनीय तन्त्र मुपालम्भमारभेरन् ॥ २३ ॥ प्रागस्तमयादह सँस्थापयन्ति ॥ २४ ॥ वैश्वकर्मण महीमू षु मातरमित्याहन्यम् ॥ २५ ॥ सूर्यो देवं इत्यस्तमिते जुहोति ॥ २६ ॥ पृष्ठ्या भिप्लवान्मासाँस्त्वावृत्तानुत्तरस्मिन्पक्ष उपयन्ति ॥ २७ ॥ विषुवतमुपेत्यावृत्तांश्च स्वरसाम्न उपयन्ति ॥ २८ ॥ विश्वजित पृष्ठ्य त्रीनभिप्लवान् ॥ २९ ॥ चतुरो मासानुपयन्ति ॥ ३० ॥ त्रीनभिप्लवानायुर्गोर्दशाहो महाव्रतमिति द्विसमा र्यताम् ॥ ३१ ॥ एकसमार्यता हविनामृद्धौ[11] विश्वजितं पञ्च मासानुपेत्य द्वावुप प्लवावायुर्गोर्दशाहो महाव्रतमुपयन्ति तेन त्वावृत्तान्सरसानुपयन्ति ॥ ३२ ॥ विभजित पृष्ठ्य त्रीनभिप्लवाँश्चतुरो मासानुपेत्यैन्द्रवायव शुक्र आग्रायण इति ग्रहाग्राणि नैकमावर्तँ[11] षण्मासान् ॥ ३३ ॥ अथ शुक्राग्रे द्वे विषुवान् ॥ ३४ ॥ आ

1 Some words seem to be missing

2 ? The ms first hand •पृष्ठे व Perhaps to be emended to बृहत्पृष्ठो रथन्तर पृष्ठो वा

3 The ms तांचुमहाप• first hand, तप चमासानुप• second hand

4 The ms अवृहतासततर first hand अवृहता second hand

5 The ms षण्मासा

6 MS I 3 37 43 f

7 There is great confusion in the text of this sūtra

8 MS IV 10 1 144 10

9 As the mantra is not derived from MS we expect it to be read sakala pāthena.

10 We expect पृष्ठ्याभिप्लवानावृत्तान्

11 ?

वृत्योत्तरस्मिन्नुपक्रामम् ॥ ३५ ॥ अपि वा यथा पृष्ठे प्रतिकृतो यथाभिप्लवे स्वरसामं च ॥ ३६ ॥ शेषे यथादिष्टम् ॥ ३७ ॥ आग्नेयाय सवने ऐन्द्राग्नौ ॥ ३८ ॥ अपि वा विहृतानैकादशिनानायतमा दशरात्रस्य चतुर्थादह्नः[3] ॥ ३९ ॥ वैष्णवँ वामनं चतुर्थे ऽहन्यैन्द्राग्नं पञ्चमे । वैश्वदेवँ षष्ठे । द्यावापृथिव्यं प्रथमे छन्दोमे । तस्याश्वतरवत्सँ वायवे नियुत्वते द्वितीये । अविँ वशा[मुत्तमे । मैत्रावरुणीँ वशा]मविवाक्ये । प्राजापत्यं तूपरं महाव्रते ॥ ४० ॥ अपि वा प्रायणीयोदयनीययोर्विभक्तानैकादशिनानालभेरन्नैन्द्राग्नानन्तरौ ॥ ४१ ॥

इति द्वादशाहे [द्वितीये ऽध्याये] तृतीय खण्डम् ॥

यद्युत्सर्गिणामयनं[5] कुर्युर्द्वितीयस्य मासस्य प्रथममहरुत्सृजेरन्नपि चोत्तरेषां मासानां प्रथमान्याभिप्लविकान्यर्धमासेभ्यस्त्रयो ऽभिप्लवास्तेषां मध्यमस्य प्रथममेकसंभार्यं द्वयोरभिप्लवयोः ॥ १ ॥ अपि वा यदहः पूर्णमास्यमामावास्यँ वा तदहरुत्सृजेरन् ॥ २ ॥ श्व उत्स्रक्ष्यामह इतीन्द्राय वत्सानुपाकुर्वन्ति ॥ ३ ॥ श्वो भूते प्राजापत्यं पशुमालभेरन् ॥ ४ ॥ तस्य वपोर्पर्याग्नेयेनाष्टाकपालेन सवनीयेनाष्टाकपालेन वैश्वदेवेन वारुणेन्द्रेणेति[7] प्रचरति ॥५॥ माध्यन्दिनस्य सवनस्य स्थाने पशुपुरोडाशैः [प्रचर्यै]कादशकपालेन सवनीयेनैकादशकपालेन मरुत्वतीयेनैकादशकपालेन वारुणेन्द्रेणेति प्रचरति ॥ ६ ॥ तृतीयसवनस्य स्थाने पशुना प्रचर्य सवनीयेन द्वादशकपालेन वैश्वदेवेन द्वादशकपालेन चरुणाग्निमारुतेनेति प्रचरति ॥ ७ ॥ पृषदाज्येन चरित्वा पत्नीः सँयाजयन्ति ॥ ८ ॥ अनुसवनमेके[8] पयः समामनन्ति प्रतिधुक्[9] प्रातःसवने शृतं[10] माध्यन्दिने दधि[11] तृतीये सवने ॥ ९ ॥ यदि[12] दीक्षासु प्रदीक्षितारितितस्ते विहारं कृत्वा दण्डप्रदानान्ते ऽग्निमभ्यस्य वाग्यतमवेदयेद्यथाग्नीध्रीये प्रणीतौ यदीक्षितान्तरितँ श्वो विहारं करोति कथँ वेदिसदो हविर्धानँ सोमप्रणयनमिति परिहासं न्युपाय

1 [1] The ms first hand स्वसामस च.

2 [1]

3 The ms first hand अपिविहृत्य नैकादशानिनाश्वंन न्द्रशरात्रस्य चतुरादहो. The second hand is worthless

4 After अन्तरा the ms adds गवामयनम्.

5 The ms •त्सर्गिणो मयनं.

6 The ms वपोप• first hand, वरोदप• second hand.

7 The ms वारुणादयैंद्रेणेति.

8 We have not been able to identify these "eke"

9 The ms प्रतिवर्

10 The ms स्तनं.

11 The ms दभा

12 From here upto the end of this section the entire passage is unintelligible, and hence we had to leave it unpunctuated

याश्चाग्नी पार्श्वतः शालामुखीयस्याहवनीयं प्रतिष्ठाप्य तस्मादौत्तरवेदिकं प्रणये दाग्नीध्रीयँ यद्यस्याग्नीध्रीयमाहवनीयशेषँ शालामुखीयेन सँसृजत्यग्निभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यत्यग्निभ्यामग्निँ सँसृजति सर्वत्र समानशीलसुतपासुपह्वेत ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] उत्सर्गिणां चतुर्थं खण्डम् ॥

अग्निष्टोमँ व्रतपृष्ठं महाव्रतम्[1] ॥ १ ॥ उदिते प्रातरनुवाकमुपाकरोति ॥ २ ॥ दधिग्रहेण प्रचर्यादाभ्यं दधिग्रहपात्रेण गृह्णाति—अग्नये त्वा प्रगृह्णामीति[2] पर्यायैः ॥ ३ ॥ त्रीनँशून्प्रवृह्य निग्राभ्याणामपत्यानामँशूञ्चतुराधूनोति—रेशीनां त्वा पत्मन्नाधूनोमीति[3] द्वाभ्यां [ द्वाभ्यां ] पर्यायाभ्याम् ॥ ४ ॥ अभि प्रातरिति[3] गृह्णाति । उपयामगृहीतो ऽसि शुक्रं त्वा शुक्र शुक्रायेति[3] च ॥ ५ ॥ आ समुद्रं इत्युत्तिष्ठति ॥ ६ ॥ वसूनामाधीताविति[3] जुहोति ॥ ७ ॥ उशिक्त्वं देव सोमेति[3] पर्यायैरशुष्कानँशूनप्यस्यति ॥ ८ ॥ गौरिवीतमुद्गाता गायति पुरस्तादुपाँश्वभिषवस्याग्र[ना]दत्ते ग्रहपात्रे ॥ ९ ॥ वरं दत्त्वा सकृदभिपुत्य सकृद् गृह्णात्यभिप्राणन् ॥ १० ॥ पराचीनेन प्राणतेति[3] ब्राह्मणव्याख्यातम् ॥ ११ ॥ अन्यवानं गृह्णाति जुहोति च ॥ १२ ॥ यदि व्यवान्याद्धिरण्यमभि व्यवान्यात् ॥ १३ ॥ कया नश्चित्र आभुवदिति[4] मनसा प्रजापतय इति[5] गृहीत्वा दधन्वे वा यदीमन्विति[6] जुहोति ॥ १४ ॥

आ नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयुः पृथिव्या अधि ॥
अमृतमसि ॥ प्राणाय त्वेति हिरण्यमभि व्यनेयात् ।
इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो वातो बृहस्पतिः ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥

इत्युदकँ स्पृशति ॥ १५ ॥ वासो ऽधीवासश्चतस्रो धेनूर्द्वादश [ वा ] हिरण्यं चैतेषामेकं दानम् ॥ १६ ॥ अँशावदाभ्ये चँ सर्वयज्ञेषु ॥ १७ ॥ आदव्यवतादाभ्यो ग्रहीतव्यः सत्रे साहस्रे सर्ववेदसे सर्वस्तोमे सर्वपृष्ठे विश्वजिति वाजपेये राजसूये ऽश्वमेधे तेषु बुभूषतां[8] ॥ १८ ॥ अतिग्राह्यान्गृह्णाति—उपयामगृहीतो ऽसीन्द्राय त्वार्कवते जुष्टं गृह्णामीत्यनुषजेत् ॥ १९ ॥ इन्द्रमित्राधिर्न इति पूर्वार्धे ।

1 The ms अग्निष्टोममतं पृष्ठं मह मतं दिवाकीर्त्यं.

2 MS I, 3, 36.

3 MS IV, 7, 7: 102, 16 sqq

4 MS II, 13, 9 159 4.

5 Prof. Caland suggests प्राजापत्यया (for प्रजापतय इति) after Āp XII, 8, 9.

6 MS II, 13, 5 154, 4

7 ! The ms आत्यदाभ्ये व वा (second hand).

8 ! The ms first hand बुभूषताथर्.

9 MS II, 13, 6 154, 15.

याज्ञाग्नी पार्श्वतः शालामुखीयस्याहवनीयं प्रतिष्ठाप्य तस्मादौत्तरवेदिकं प्रणये दाग्नीध्रीयें यद्यस्याग्नीध्रीयमाहवनीयशेषं शालामुखीयेन संसृजत्यभिप्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यत्यग्निभ्यामग्निं संसृजति सर्वत्र समानशीलसुत पासुपद्येत ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] उत्सर्गिणा चतुर्थं खण्डम् ॥

अग्निष्टोमं व्रतपृष्ठ महाव्रतम्[1] ॥ १ ॥ उदिते प्रातरनुवाकमुपाकरोति ॥ २ ॥ दधिग्रहेण प्रचर्यादाभ्यं दधिग्रहपात्रेण गृह्णाति—अग्नये त्वा प्रवृहामीति[2] पर्यायैः ॥ ३ ॥ त्रीनंशून्प्रवृह्य निग्राभ्याणामपत्यानामंशून्चतुराधूनोति—रैशीना त्वा पत्मन्नाधूनोमीति[3] द्वाभ्यां [ द्वाभ्यां ] पर्यायाभ्याम् ॥ ४ ॥ अभि प्रात रिति[4] गृह्णाति । उपयामगृहीतो ऽसि शुक्र त्वा शुक्र शुक्रायेति[5] च ॥ ५ ॥ आ समुद्रों इत्यु त्तिष्ठति ॥ ६ ॥ वसूनामाधीताविति[3] जुहोति ॥ ७ ॥ उशिक्त्व देव सोमेति[3] पर्यायैर शुष्कानंशूनप्यस्यति ॥ ८ ॥ गौरिवीतमुद्गाता गायति पुरस्तादुपांश्वभिषवस्यांशू [ना]दत्ते ग्रहपात्रे ॥ ९ ॥ वरं दत्त्वा सकृदभिषुत्य सकृद् गृह्णात्यभिप्राणन् ॥ १० ॥ पराचीनेन प्राणेतेति[3] ब्राह्मणव्याख्यातम् ॥ ११ ॥ अव्यवान गृह्णाति जुहोति च ॥ १२ ॥ यदि व्यवान्याद्धिरण्यमभि व्यवान्यात् ॥ १३ ॥ कया नश्चित्र आभुव दिति[4] मनसा प्रजापतय इति[5] गृहीत्वा दधन्वे वा यदीमन्विति[6] जुहोति ॥ १४ ॥

आ न प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयु पृथिव्या अधि ॥
अमृतमसि ॥ प्राणाय त्वेति हिरण्यमभि व्यनेयात् ।
इन्द्राग्नी मे वर्च कृणुतां वर्च सोमो वातो बृहस्पति ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥

इत्युदकं स्पृशति ॥ १५ ॥ वासो ऽधीवासश्चतस्रो धेनूर्द्वादश [ वा ] हिरण्यं चैतेषामेक दानम् ॥ १६ ॥ अंशावदाभ्ये च सर्वयज्ञेषु ॥ १७ ॥ आत् व्यवतादाभ्यो ग्रहीतव्य सत्त्रे साहस्रे सर्ववेदसे सर्वस्तोमे सर्वपृष्ठे विश्वजिति वाजपेये राजसूये ऽश्वमेधे तेषु बुभूषतां ॥ १८ ॥ अतिग्राह्यान्गृह्णाति—उपयामगृहीतो ऽसीन्द्राय त्वार्कवते जुष्टं गृह्णामीत्यनुपजेत् ॥ १९ ॥ इन्द्रमिद्गाथिनं इति पूर्वार्धे ।

1 The ms अग्निष्टोमव्रत पृष्टे महव्रत दिवाकीर्त्यं
2 MS I 3 36
3 MS IV 7 7 102 16 sqq
4 MS II 13 9 159 4
5 Prof Caland suggests प्राजापत्यया (for प्रजापतय इति) after Āp XII 8 9
6 MS II 13 5 154 4
7 ¹ The ms आत्यदाभ्ये म वा ( second hand)
8 ¹ The ms first hand बुभूषताश्वर्
9 MS II 13 6 154 15

अभि त्वा शूर नोनुम इति दक्षिणार्धे । त्वामिद्धि हवामहे इत्युत्तरार्धे ।

इमा नु कं भुवना सिषधेमेन्द्रश्च विश्वे [ च ] देवाः ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥

इति पश्चार्धे ।

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥

इति मध्यमे ॥ २० ॥ वृष्टिग्रहं गृह्णाति मार्त्तिके चतुष्टे[2]—

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥

इति उदीरयता मरुतः[3] ॥ सुत्रामाणम् ॥ महीमु षु मातरमिति[4] चतुः प्रत्यृचमदित्यै त्वेति[5] चतुर्थं जुष्टं गृह्णामीत्यनुपजेत् ॥ २१ ॥ वैजुपनमुपृष्ठ्यामतिग्राह्यान्वैश्वकर्मणादित्यौ सारस्वतवैष्णवाविति गृह्णाति ॥ २२ ॥ महेन्द्रस्य स्तोत्रे औदुम्बरीमासन्दीमुद्गातारोहति ॥ २३ ॥ औदुम्बरीं कुर्वीतयवो ॥ २४ ॥ वाणं शततन्तुं मौञ्जि[भि]र्मेन्यिभिरध्वर्युरुद्गात्रे प्रयच्छति ॥ २५ ॥ अध्वर्युरन्यश्चैकषं दिष्टं लृत्यं मासपूजादधाज्युदुलिकापिष्टिकाः काण्डवीणाश्च ॥ २६ ॥ वेदिस्त्रक्तिषु दुन्दुभीनाघ्नन्ति ॥ २७ ॥ भूमिदुन्दुभिः पञ्चमः पश्चादाग्नीध्रीयस्य सवनीयस्य चर्मणापिहितः ॥ २८ ॥ तस्य पुच्छेन वादयन्ति ॥ २९ ॥ पुरस्तादाग्नीध्रीयस्यान्तर्वेदि ब्रह्मचारी बहिर्वेदि पुंश्चली ॥ ३० ॥ [सा] ब्रह्मचारिणमाह—अनार्यकर्मन्नवकीर्णिन्दुश्चरितिन्निति[10] ॥ ३१ ॥ धिक्त्वा जाल्मि पुंश्चलि परस्यार्यजनस्ये मार्जनीति ब्रह्मचारी प्रत्याह ॥ ३२ ॥ अन्तर्वेद्यभिगरो बहिर्वेद्यपगरः ॥ ३३ ॥ नाराद्युरिमे सनिरण इत्याहापगर औरसः केशान्प्ररोह्य पशूनिपप्वा पवमाना द्युलोकमभ्यर्चन्त आसिपतेति[12] ॥ ३४ ॥ अराद्युरिमे सनिरण इत्याहाभिगरस्तपस्विनो वरफल्गुसिनो जयप्ररोहापक्सुपयन्तः स्वर्गलोकमभ्यर्चन्त आसिपतेति[13] ॥ ३५ ॥ परिश्रयति

1 MS II. 13. 9 158. 14, 18.

2 The ms चतुष्टे first hand, चतुष्पथे second hand. Cp KS XXX. 4 186. 2 चतुस्तलं ~~क्रं~~ भवति.

3 MS II. 4. 7: 45 1.

4 MS IV. 10. 1 144 8, 10

5 The ms त्वा

6 ? The ms second hand जु० (for वैजु०).

7 The ms स्तोत्रम्.

8 ? The sutra is corrupt and incomplete.

9 The sūtra is hopelessly unintelligble.

10 The ms ब्रह्मचारिणानिमाह नर्य. कर्म कर्मनव कीर्तितश्चरितिनिति.

11 ? The ms पुरस्यर्यजनस्य.

12 ? The ms आहानरातस चिमे सनिरण इत्याहारकरमुरस केशान्प्ररोह्य पशून्पिप्ण पवमाना द्युलोकमभ्यर्चतमाशिपतेति.

13 The sutra is not clear. The ms वरफल्गुसेनो and आमिपतीति.

मिथुनचारिभ्यां[1] दक्षिणापरां[2] प्रति वेदिश्रोणिं वहिर्वेदि ॥ ३६ ॥ तौ मिथुनं[3] संभ यतः ॥ ३७ ॥ अग्रेण मार्जालीयं शूद्रार्यौ चर्ममण्डले व्यायच्छेते कृष्णशुक्ले[4]संहते क्षकदावरे[5] ऽभ्यन्तरत पार्श्वे ॥ ३८ ॥ अन्तर्वेद्यार्यो वहिर्वेदि शूद्र आह—इम उद्वासीकारिण इमे दुर्भूतमकन्निति । इमे ऽरात्सुरिमे सुभूतमकन्नित्याहार्य• ॥ ३९ ॥ संजित्य प्रसदस्यध्यस्यर्त्युपरिष्टाच्छुक्लमवस्तात्कृष्णकदम्[6][7] ॥ ४० ॥ मार्जालीयान्ते[8] कुम्भीभ्य[9] प्रयच्छति ॥ ४१ ॥ परियन्ति चतस्रः षडष्टौ वा दास्यश्चतु प्रत्यृचम्—

गाव सुरभयो नित्य गावो गुग्गुलगन्धय ।

गावो घृतस्य मातरस्ता इह सन्तु भूयस्य ॥

इद मधिद मधिति पादान्निघ्नन्ति ॥ ४२ ॥

नैनं[10] गावो मार्गीरस्य गङ्गाया उदक पपु ।

पपु सरस्वत्या नद्यास्ता प्राचीश्चोज्जगाहिरे[11] ॥

एता वय प्लवामहे शम्या प्रतरतामिव ।

निकीर्य तुभ्य मध्य आकर्ष्ये कार्ष्यो यथा ॥

यदा राघटी वदतो ग्राम्यमनिरसाकसंजनस्य ।

भद्रे मे वर्तं राशे राश परिक्षितः ।

कर्मग्रामो ऽवरुन्द्धेतानड्वाँस्तप्यते वहन्[12] ॥

इति ॥ ४३ ॥ परीत्य मार्जालीयं [यथार्थं गच्छ]न्ति ॥ ४४ ॥ उत्तरत स्तीर्थस्यै[13] वार्शं[14] चर्म वर्धायोपकल्पयति ॥ ४५ ॥ दक्षिणत• संजानमपावधा[15] क्षत्रिया रथेषु कवचिन• सनद्धा विध्यन्ति ॥ ४६ ॥ विहार त्रिपत[16] पर्यायन्ति ॥ ४७ ॥ सारथयो[17] भवन्ति ॥ ४८ ॥ मध्ये ग्रीवासु भसदो ऽग्रे वाँ प्रतिदिशमिपूर्नस्त्वा यन्ति ॥ ४९ ॥ प्रातानर्हन्ति ॥ ५० ॥ स्तोत्रान्ते शब्दा शाम्यन्ति ॥ ५१ ॥ औदु

1 The ms •वारित्या
2 The ms दक्षिणा परा
3 ? The ms तानुमिथुनं
4 The ms •शुक्ल
5 ? The ms •चरे
6 ? The ms सुरार्थप्रसदस्यध्याभ्यु•
7 The ms कृदुक्म्
8 The ms •न्ति
9 The ms कुनिभ्य
10 The ms न वै
11 The ms प्राची सचगाहिरे
12 ? The last three lines are after the ms first hand The corrections by the second hand are in accordance with Āp
13 The ms उत्तरतीर्थस्य
14 The ms वास
15 ?
16 ? The ms निसत त्रिपत=त्रि ?
17 ? The ms सारयतो
18 The ms ग्रीवास्वभतो ऽग्निं वा
19 The ms •मिष्ट्वन•

म्बरं प्रेङ्खं होतारोहति ॥ ५२ ॥ औदुम्बरं फलकमपादमध्वर्युः ॥ ५३ ॥ तस्मिन्प्रतिगृणाति ॥ ५४ ॥ एकं महच्छस्त्रं पर शतं शंसति ॥ ५५ ॥ परिधानीयां संपाद्य मध्यमैष्येप्रहानमसवनयति ॥ ५६ ॥ त्वे क्रतुमपि वृञ्जन्ति विश्व इति पूर्वार्धस्य द्विर्येदेते त्रिर्भवन्त्यूमा इति दक्षिणार्धस्य स्वादो स्वादीय स्वादुना सृजा समित्युत्तरार्धस्यात ऊ षु मधुना मधुनाभियोधीति पश्चार्धस्य विग्रहमुपशये पर्यासिच्य महेन्द्रेण प्रचरत्यतिग्राह्यांश्च ॥ ५७ ॥ ग्रहान्समधनीय सर्वे भक्षयन्ति—महस्ते भक्षयामि यशास्ते भक्षयामि स्तोमं ते भक्षयाम्यन्नाद्य ते भक्षयामि प्रजा मे भक्षयामि प्रतिष्ठां भक्षयामीति ॥ ५८ ॥ प्रागस्तमयादह्नः संस्थापयन्ति ॥ ५९ ॥ सूर्यो देव इत्यस्तमिते जुहोति ॥ ६० ॥

इति द्वादशाहे [द्वितीये ऽध्याये] महाव्रत पञ्चमं खण्डम् ॥

एकादशिन्यां प्रतिपशु यूपांश्छिन्दन्ति ॥ १ ॥ उपशयं द्वादशं पात्नीवतं त्रयोदशम् ॥ २ ॥ एका यूपाहुतिः ॥ ३ ॥ पृथगास्वनीयो ॥ ४ ॥ जोपरेण समेत्य पर्यञ्जनेन समीयात् ॥ ५ ॥ एवं समानजातीयेन सर्वाननुक्रामति पशूंश्च ॥ ६ ॥ अग्नीषोमीयकाले यूपानुच्छ्रयत्यपि वाग्निष्ठं श्वो भूत इतरान् ॥ ७ ॥ अग्रेणाहवनीयं परिलिखति ॥ ८ ॥ दक्षिणमग्निष्ठात्परिलिख्योत्तरं परिलिखति ॥ ९ ॥ एतेन धर्मेण व्यत्यासम् ॥ १० ॥ उदगपवर्गा यूपा दक्षिणापवर्गाः पशवः ॥ ११ ॥ स्फ्येन परिलिखति ॥ १२ ॥ रथाक्षमात्राणि यूपान्तरालानि ॥ १३ ॥ तिरश्चान्तं संमिनोति ॥ १४ ॥ एवं संमिता भवन्ति ॥ १५ ॥ अञ्जनादि परिव्ययणान्तमग्निष्ठान्तं संमिनोति ॥ १६ ॥ यदि श्वो भूते समानम् ॥ १७ ॥ अथ घेर्यूपैश्चतुरञ्जनेन समेत्योच्छ्रयणेन समीयात् ॥ १८ ॥ समस्याग्निष्ठस्य रशने परिव्ययतीतरेषां च द्वे द्वे ॥ १९ ॥ समासे समाग्निष्ठे परिव्यत्यमि वा ता यसत्यग्निष्ठवर्जम् ॥ २० ॥ यं कामयेत पितृलोक ऋध्नुयादिति ब्राह्मणव्याख्यातम् ॥ २१ ॥ दक्षिणस्मात्पश्चाद्दक्षिणतः प्राञ्चमुपशयं निदधाति—इदमहममुमामुष्यायणममुष्या पुत्रमिन्द्रपाशेनाभिनैस्यामीति यूपं रशनयाभिनैस्यति ॥ २२ ॥ इदमहममुमामुष्यायणममुष्या पुत्रमिन्द्रवज्रेणाभिनिदधामीति यूपाग्रं स्वरुणाभिनिदधाति ॥ २३ ॥ तूष्णीमनभिचरतः ॥ २४ ॥ समाग्नि

1 1 The ms पराशाय first hand, प्रशास्ता second hand
2 Hopelessly corrupt
3 The ms विग्रहम्॰ first hand, विग्रहमु॰ second hand
4 The ms ॰धिम्वन्ति
5 1
6 The ms चा॰.
7 The ms यूपान्तराणी.
8 1 The ms नेत्यू॰.
9 The sūtra is unintelligible.
10 MS IV. 7. 9 105 8 sqq
11 The ms प्रांचमुद्यतिदधाति.
12 We expect the present tense and not the future Cp the mantra in the following sūtra
13 MS IV. 7, 9 106, 3

नुयात्प्रतिष्ठाकामस्य ॥ २५ ॥ त्रीन्मध्यतः समान्पशुकामस्य[1] ॥ २६ ॥ व्यतिषजेदितरान् ॥ २७ ॥ अग्निष्ठं वर्षिष्ठमिन्द्रियकामस्य ग्रहशेषाँश्च संमिनोति ॥ २८ ॥ यौ ताभ्यामनन्तरौ तावग्निष्ठस्य[2] समौ ॥ २९ ॥ पर्यंतानात्संमिनोत्यग्निष्ठाँ ह्रसीयस इतरान्[3] यदि कामयेत [विद् क्षत्रादो]जीयसी स्यादवलीयः क्षत्रमिति ये दक्षिणतो ऽग्निष्ठात्तान्वर्षीयसः कुर्यात् ॥ ३० ॥ उन्नताँ संमिनोति ॥ ३१ ॥ आश्विनं गृहीत्वा यूपात्सनाद्यग्निष्ठदेवं दार्य रशने द्वे द्वे समे एकैकं[4] परिवीय कृष्णग्रीर्वमाग्नेयमग्निष्ठे मेषी[5] सारस्वतीमुत्तरस्मिन्सौम्यं बभ्रुं दक्षिणस्मिन् ॥ ३२ ॥ व्यतिषजेदितरान् ॥ ३३ ॥ श्यामः पौष्णः शितिपृष्ठो बार्हस्पत्यः पिशङ्गो वैश्वदेवो घृष्णिरैन्द्रः कल्माषो मारुतः सँहित ऐन्द्राग्नो ऽधोरामः सावित्रः पेत्वो वारुणः ॥ ३४ ॥ वारुणं दक्षिणार्ध्यम् ॥ ३५ ॥ उपशयाय पशुं निर्दिशत्यारण्यम् ॥ ३६ ॥ छगलस्ते ऽय पशुरिति वा ॥ ३७ ॥ यं द्विष्यात्तं ब्रूयादसौ ते पशुरिति[6] ॥ ३८ ॥ पामघाहे मित्राहे द्वयोर्द्विपद्वहुपु वहुवती[7] ॥ ३९ ॥ असाविति यत्र स्यात्तत्र वहुत्वं निगमयेत ॥ ४० ॥ ये पश्वभिधायिनः शब्दाः पशवह्यान्युभिपतौ पिता माता भ्राता सखेति व्यूहति[8] ॥ ४१ ॥ हविर्वेर्हविर्वाङ्मनः प्राणश्चक्षुः श्रोत्रं त्वगसुरुन्मेति[9] ॥ ४२ ॥ अपाकरणौ द्वौ दर्भविका शाखा ॥ ४३ ॥ प्रतिपशु शस्त्रं वपाश्रपणी ॥ ४४ ॥ सर्वानन्वारभ्य शामित्रं नयन्ति प्रतिपश्वध्वर्यवो ऽन्वारम्भेण वपोद्धरणे वपाश्रपणे च सकृदादित्योपस्थानं प्रव्रजनमन्त्रश्च ॥ ४५ ॥ एकव्यं[2] पाशानुमहरति तृणाग्राणि वपाश्रपणीः स्वरूँश्च ॥ ४६ ॥ एकः पशुपुरोडाशः समानदेवतेषु प्रतिपशु नानादेवतेषु ॥ ४७ ॥ आवर्तते मनोता ॥ ४८ ॥ एकादश जुह्वस्त्पाद्यावदानेनानुक्रम्य चरणेनानुक्रामति ॥ ४९ ॥ यद्येका जुह्वर्भवति प्रतिदेवतं पशुभिः प्रचरति ॥ ५० ॥ एकस्मिन्नर्धर्चे सर्वेषां याज्यायां वसाहोमं जुहोति ॥ ५१ ॥ समासिच्य दिग्घोमम् ॥ ५२ ॥ ततो वनेष्ट्वा ॥ ५३ ॥ गुदादीनां जाघनीनां सर्वेषां प्रधानम् ॥ ५४ ॥ अनुवन्ध्याया हुतायां वपायामग्रेण शालामुखीयं प्राग्वंशे पत्नीवतं[10] संमिनोति ॥ ५५ ॥ पौर्णमासिकी वेदिः ॥ ५६ ॥ पाशुकान्याज्यानि ॥ ५७ ॥ अधोनाभिमचषालम् ॥ ५८ ॥ अनवस्तीर्णो यूपावटः ॥ ५९ ॥ तस्मिन्साण्डं

1 Based on MS IV 7, 9 105, 6

2 ?

3 The ms तामग्निष्ठोमस्य

4 The sentence is corrupt

5 MS ib 106 2

6 This might refer to the mantra in MS I, 2 15 24 12 sqq

7 The ms प्रवृषण॰.

8 ? The ms ॰र्धचेषा प्राया.

9 ? The ms वनिष्टया.

10 The ms पत्नीवंत

11 The ms सपौर्णमा॰ Cp Mān V, 2. 12, 35 दार्शिकी वेदि .

त्वाष्ट्रं सकलमुपाकरोति ॥ ६० ॥ आवेदनवेलायां त्वष्टारँ वनस्पतिं चावाहयति पर्यग्निकृतमुत्सृज्य यावन्ति पशोरवदानानि तावत्कृत्व आज्यस्यावदायाग्रेयं[2] त्वष्टारँ वनस्पतिं च यजति ॥ ६१ ॥ अपि वा पर्यग्निकरणान्तं करोति ॥ ६२ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] एकादशिनीयं षष्ठं खण्डम् ॥

सौत्रामणिँ[3] सोमवामिनः सोमाभिव्यजनस्य राजसूयेनाभिषिषिचानस्य[3] भूतिकामस्य ज्योगामयाविनो ऽन्नाद्यकामस्य पशुकामस्य भ्रातृव्यवतो[4] ऽभिशस्यमानस्य वा ॥ १ ॥ सीसेन क्लीबाच्छष्पाणि कृष्णेन तसरपदमणौ सोमविक्रयिणो[6] वा [क्रीणाति] ॥ २ ॥ गार्हपत्य ओदनँ श्रपयित्वा लाजान्सँसृज्य तोक्मं नग्नहुर्लाजा मासरमिति[8] ॥ ३ ॥ स्वाद्वीं त्वा स्वादुनेति[8] शष्पैः सुरां सँसृजति ॥ ४ ॥ सोमो ऽस्य अश्विभ्यां पचस्वेति[8] ककुभ्यां[9] समवदधाति ॥ ५ ॥ तिस्रो रात्रीः सँहिता वसति ॥ ६ ॥ तिसृणां[1] पारे पशुबन्धः ॥ ७ ॥ प्रणीते ऽग्नौ दक्षिणतो ऽग्नेर्दक्षिणस्मिन्वेद्यँसे प्रणयत्यपि वा पर्यग्निकरणान्तं कृत्वा तदेवोल्मुकमुपसमादध्यात् ॥ ८ ॥ तस्य शेषं पशुश्रपणँ हरेयुः ॥ ९ ॥ सन्नेष्वाज्येषु सुरामभ्युदानयन्ति ॥ १० ॥ ब्राह्मणस्य मूर्धन्सादयित्वा द्रोणे वालँ वितत्य सुरामतिपावयति—पुनातु ते परिस्रुतमिति[8] ॥ ११ ॥ प्रत्यक्सोमे इति सोमातिपवितस्य ॥ १२ ॥ अग्रेण दक्षिणाग्निँ सिकतानां खरः ॥ १३ ॥ तस्मिन्पालाशमाश्वत्थमौदुम्बरं नैयग्रोधमिति पात्राणि ॥ १४ ॥ तेषु कुविदङ्गेति[8] सुराग्रहान्गृह्णात्युपयामगृहीतो ऽस्यच्छिद्रां त्वाछिद्रैरेत्याश्विनं गृहीत्वा कुवलसक्तुभिः श्रीणाति[11] ॥ १५ ॥ सिँहायाध्वर्युर्ध्यायति ॥ १६ ॥ सारस्वतं द्वितीयं प्रतिप्रस्थाता ॥ १७ ॥ कर्कन्धुसक्तुभिर्व्याघ्रलोमैश्च[12] श्रीणाति ॥ १८ ॥ व्याघ्रौ प्रतिप्रस्थाता ध्यायति ॥ १९ ॥ इन्द्राय सुत्राम्णे तृतीयँ यजमानः ॥ २० ॥ [बदरसक्तुभिः श्रीणाति ॥ २१ ॥ वृकौ यजमानो ध्यायति ॥ २२ ॥] एष ते योनिरमुष्मै त्वेत्यायतने यथास्थानँ सादयति ॥ २३ ॥ यूपँ संमीय पशूनुपाकरोत्याश्विनमजँ सारस्वतीं मेषीमैन्द्रँ वृषभँ वृष्णिँ [वा] ॥ २४ ॥ बार्हस्पत्यं चतुर्थँ सोमातिपवितस्य ॥ २५ ॥ इन्द्राय सुत्राम्ण एकादशकपालः

1 The ms शकल॰.

2 ?

3 The ms ॰भिषिंचानस्य.

4 The ms ॰वधोतो (for ॰वतो).

5 ? The ms स्यंस्रुत.

6 ? The ms ॰विक्रिणा first hand, ॰विक्रयिणा second hand

7 The sûtra is not perfectly intelligible. Cp Âp XIX. 5. 7-11.

8 MS II. 3. 8.

9 The ms स्तृणां.

10 The ms ॰न्द्वा॰.

11 The ms स्तृणाति.

12 व्याघ्रलोमैश्च is not based on the Samhitâ, and may be an interpolation

सावित्रे ऽष्टाकपालो वारुणो यवमयश्चरुरिति[1] पशुपुरोडाशान्निरुप्य ग्रहैः प्रचरति ॥ २६ ॥ आश्विनमध्वर्युरादत्ते सारस्वतं प्रतिप्रस्थातैन्द्रं यजमान ॥ २७ ॥ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सोमानामनुब्रूहि ॥ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सोमान्प्रस्थितान्प्रेष्येति संप्रेष्यति ॥ २८ ॥ वषट्कृतानुवषट्कृते हुत्वाभिषेकाभि प्रहरणादि[2] पशूनां च वसया क्षत्रस्य योनिरसीति[3] सार्येण धिमास्तमांसन्दीमास्तीर्य दक्षिणत आहवनीयस्य निदधाति—स्योनासि सुषदेति[4] ॥ २९ ॥ सुषदामासीदेत्यारो हन्तमनुमन्त्रयते ॥ ३० ॥ निषसाद धृतव्रतं इति रूढार्यं व्याघ्रविष्टदिवेति[5] चाभि षिच्यमानं[6] साम गायत्यैन्द्र्यां बृहत्याम्—सँश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति। निधनमुपयन्ति ॥ ३१ ॥ साम गायति द्विर्वा स्वाहाकरोति ॥ ३२ ॥ देवस्य त्वेत्यै भिषेकमादाय त्वया देवं इति यजमानमीक्षमाणो जुहोति ॥ ३३ ॥ प्रथमास्त्वा द्वितीयै- रित्यंभिषिञ्चति ॥ ३४ ॥ भू स्वाहेत्यैाहवनीय आहुतिं जुहोति यथा राजसूये ॥ ३५ ॥ शिरो मे श्रीरिति[10] यथारूपं गात्राणि संमृशति ॥ ३६ ॥ लोमानि प्रयतिरिति[10] पूर्णाहुतिं जुहोति ॥ ३७ ॥ जङ्घाभ्यां पद्भ्यामित्यंवरोहति ॥ ३८ ॥ द्वात्रिँशतं गा ददाति वडवाँश्च सकिशोरान् ॥ ३९ ॥ यद्देवा देवहेडनमिति[11] तिसृभिरवभृथमेप्यक्षा- हुतिं जुहोति ॥ ४० ॥ धाम्नो धाम्न[11] ॥ यद्भामे इति मार्जयते ॥ ४१ ॥ पवित्रमसीत्यै वभृथे स्नात्वोद्वयं तमसस्परीत्यैादित्यमुपस्थायापो अद्यान्वचारिषमिति[12] समिध आह- रन्ति ॥ ४२ ॥ एधो ऽस्येधिषीमहीति[13] समिदाधानः ॥ ४३ ॥ समावृतदिति[14] पूर्णाहुतिं जुहोति ॥ ४४ ॥

यदापिपेष मातर पुत्र प्रमुदितो धयन् ।
एतत्ते अग्ने अनृ[णो भवाम्यहतौ पितरौ मया ॥]

सुरावन्तमित्युँत्तरस्मिन्नग्नौ पयोग्रहान्जुहोति ॥ ४५ ॥ यस्ते रसँ इति दक्षिण स्मिन्सुराग्रहान् ॥ ४६ ॥ समवनीयाध्वर्यु प्रतिप्रस्थाताग्नीध्र इत्याश्विनं भक्ष यन्ति ब्रह्मा होता मैत्रावरुण इति सारस्वतमैन्द्रँ यजमान ॥ ४७ ॥ यमश्विना नमुचेरिति[15] पयोग्रहान्भक्षयन्ति ॥ ४८ ॥ यदत्र शिष्टमिति[15] सुराग्रहान्समवनीय

1 The ms यवमयश्चरुरैन्द्र एकादशकपाल इति
2 ! The ms ॰प्रहरणाभि
3 MS II 6 9 69 3
4 !
5 MS II 6 12 71 10, 11
6 The ms रूढाया first hand, रूढाय second hand
7 ! Perhaps the original was something like व्याघ्रचर्म विवेश्यति
8 ! To be emended to ॰माने ?
9 ! The ms एन्द्रया इहस्त्या
10 MS III 11 8
11 MS III 11 10
12 MS II, 12 5 149 12
13 MS I, 3 39
14 MS III 11, 10 157, 13
15 MS III 11, 7

दक्षिणस्मादग्नेर्दक्षिणा श्रोनङ्गारानुदूह्य स्रुचर्याभिजुहोति—पितृभ्य. स्वधायिभ्यः स्वधा नम. ॥ पितामहेभ्यः स्वधायिभ्य स्वधा नम. ॥ प्रपितामहेभ्यः स्वधायिभ्य स्वधा नम इति ॥४६॥ अक्षन्पितरः ॥ अमीमदन्त पितरः[1] ॥ पितर. शुन्धध्वमित्यपो निनयति ॥ ५० ॥ तेन घर्मेण सुराँ विहारयति वालमन्तर्धायोर्णासूत्रं [वा]—त्वँ सोम प्रचिकित[2] इति द्वादश पुनन्तु मा पितर[3] इति द्वादश चतस्रो ऽन्यासांतश्रोण्यासाँ[4] व्यत्यासमृत्विजः सर्वे स्रवन्तीमनुमन्त्रयन्ते ॥ ५१ ॥ ऐन्द्रस्याधदानैः प्रथमं प्रचरति जघन्यमाश्विनस्य ॥ ५२ ॥ पशुपुरोडाशैः प्रचर्य पशुभिः प्रचरति ॥ ५३ ॥ पुरस्तात्स्विष्टकृतो रसं जुहोति द्वात्रिँशता शृङ्गशफैः संसिन तन्त्रमिति[6] षोडश द्वयोर्द्विमार्हमेकैकँ वा जुहोति ॥ ५४ ॥ हुत्वा पात्र्याँ संपातानवनयति ॥ ५५ ॥ अभिरोति[7] सँस्कृता-मन्वहं—परीतो षिञ्चता सुतमिति[8] पयसा परिषिञ्चत्येकस्या दुग्धेन प्रथमायाँ व्युष्टायां[10] द्वयोर्द्वितीयस्याम् ॥ ५६ ॥ [अदित्यै घृते चरु]रैन्द्रश्च प्रथमँ[9] व्युदानयति ॥ ५७ ॥ न मूर्धनि सादयति ॥ ५८ ॥ तेन घर्मेण सुरामतिपाव्य मह्म चत्र-मित्यैर्णासूत्रेण पयो ऽतिपावयति ॥ ५९ ॥ तथावेक्षते[12] ॥ ६० ॥ द्वे द्वे वायव्ये ॥ ६१ ॥ तेषु कुविदङ्गेति[13] पयोग्रहान्गृह्णाति—उपयामगृहीतो ऽस्यच्छिद्रा त्वाछिद्रेणेति[13] यथादेवतम् ॥ ६२ ॥ व्रीहिसक्तुभिराश्विनँ श्रीणाति यवसक्तुभिः सारस्वतं गोधूमसक्तुभिरैन्द्रँ[14] श्यामाकसक्तुभिरुपवाकसक्तुभिरितरान् ॥ ६३ ॥ श्येन-पत्रेण परिमार्जनम् ॥ ६४ ॥ एष ते योनिस्तेजसे त्वेति प्रथमँ सादयति वीर्याय त्वेति द्वितीयं बलाय त्वेति तृतीयम् ॥ ६५ ॥ नाना हि वामिति[15] सुराग्रहान्गृह्णाति—उपयामगृहीतो ऽस्याश्विनं तेज इति प्रथमँ सारस्वतँ वीर्यमिति द्वितीयमैन्द्रं बलमिति तृतीयम् ॥ ६६ ॥ एष ते योनिर्मोदाय त्वेति प्रथमँ सादयत्यानन्दाय त्वेति द्वितीयं महसे त्वेति तृतीयम् ॥ ६७ ॥ सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते ॥ ६८ ॥ ते पशवो यार्देस्पत्यवर्जम् ॥ ६९ ॥ त्वग्रस्याश्विनो[x] ऽजः ॥ ७० ॥ ते पशुपुरोडाशाः ॥ ७१ ॥ ते ग्रहैः प्रचरन्ति द्वाभ्यां द्वाभ्यामेकैकः ॥ ७२ ॥ समानः संप्रैषः ॥ ७३ ॥

1 The ms अक्षन्न first hand, अक्षयं second hand (for अक्षन्).
2 MS I. 10. 3 143 3.
3 MS IV. 10 6 156 6.
4 MS III. 11. 10 155 6
5 ?
6 MS III 11. 9 153. 1.
7 ? विमार्हं (for द्वयोर्द्विमर्हं) ?
8 ? सुरों संस्करोति ?
9 MS III. 11. 7: 149. 18.
10 In place of व्युष्टायां the ms has शूला-यामदित्यै घृते चरुर्.
11 MS ib 150. 10
12 ? The ms °वेक्षे.
13 MS II. 3. 8.
14 The ms first hand adds सप्यसक्तुभि°.
15 MS III. 11. 6 148. 9.

[आश्वि]नस्य[1] सारस्वतेन यजति सारस्वतीमैन्द्रस्याश्विनेन ॥ ७४ ॥ समवनीय होताध्वर्युः परिक्रीतौ यदत्र शिष्टमिति[2] भक्षयतः ॥ ७५ ॥ यदि न भक्षयतां द्वे स्रुती[2] इति वल्मीकवपायामवनयेदग्नौ विक्षारयेत ब्राह्मणो वा प्राश्नीयाद्यजमानो वा स्वयं भक्षयेत् ॥ ७६ ॥ ये[3] भक्षयन्त[3] इति तिसृभिस्तिस्र आहुतीर्जुहोति ॥ ७७ ॥ कुम्भीँ शतातृण्णामध्यधि दक्षिणमग्निं कृत्वा तस्याँ सुराँ[4] विक्षारयति [हिरण्य]-मन्तर्धाय ॥ ७८ ॥ त्वँ सोम प्रचिकित[5] इति तासां तिसृभिस्तिसृभिरेकैको ऽनुमन्त्रयते पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत आग्नीध्रः ॥ ७९ ॥ पितरो मादयन्ताँ [ व्यशेम देवहितँ ] यदायुरिति सर्वे स्रवन्तीमनुमन्त्रयन्ते ॥ ८० ॥ ऐन्द्रस्यावदानैः प्रथमं चरति जघन्यमाश्विनस्य ॥ ८१ ॥ पशुभिः प्रचर्य पशुपुरोडाशैः प्रचरति ॥ ८२ ॥ सहस्विष्टकृदिडं पशूनां पशुपुरोडाशानां च ॥ ८३ ॥ ऋषभो दक्षिणा सूत्वरी च वडबा ॥ ८४ ॥ सँस्थिते मासरैः शूलैश्चावभृथँ यन्ति यथा वरुणप्रघासेषु ॥ ८५ ॥ मासराणि पुरोडाशस्थाने ॥ ८६ ॥ चरुणा प्रचर्य हृदयशूलानुपचरन्ति[7] ॥ ८७ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] सौत्रामण्यां सप्तमं खण्डम् ॥

कौकिल्यां ते कामा ये पूर्वस्यामन्ये च तेजस्कामस्य वीर्यकामस्य बल कामस्य नर्याणि त्रीणि ॥ १ ॥ तेन धर्मेण सुराँ सँस्क...॥ २ ॥

[यदापिपेष मातरं पुत्रः प्रमुदितो धयन्।
एतत्ते अग्ने अनृ]णो भवाम्यहतौ पितरौ मया ॥

अनृणो देवानामनृण[9] पितृणां मनुष्याणामनृणो भवामि यदत्तत्तँ सँस्कारादीष्ट सर्वस्मादनृणो भवामीति हुत्वेष्टिं निर्वपति ॥ ३ ॥ अदित्यै घृते चरुः ॥ ४ ॥ सँस्थितायामिन्द्राय वयोधसे पशुर्ऋषभो दक्षिणा धेनुरदित्यै ॥ ५ ॥ वत्सं पूर्वस्यां ददाति मातरमुत्तरस्याम् ॥ ६ ॥ प्रथमो ऽनुवाकः प्रथमस्य पशुबन्धस्याप्रीः ॥ ७ ॥ आ चर्षणिप्रा[1] इति षडर्चँ याज्यानुवाक्याः ॥ ८ ॥ द्वितीयो ऽनुवाकः प्रयाजप्रैषाः ॥ ९ ॥ तृतीय आप्रीः ॥ १० ॥ चतुर्थस्य तिस्रो वपायास्तिस्रः पशुपुरोडाशानाम् ॥ ११ ॥ तासां प्रथमामनूच्य मध्यमया यजेन्मध्यमामनूच्योत्तमया यजेदुत्तमा-

1 ?
2 MS II, 3, 8.
3-3 ? The ms ॰यक्षमाणो वार्शक्यस्मनेय.
4 The ms सुचाँ first hand, सुचा second hand.
5 MS IV, 10, 6 : 156, 6.
6 The ms सँस्थिते मावेरे स्यलैः स्वा॰ first hand, सँस्थिते मासरैश्शूलैः स्वा॰ second hand.
7 ? The ms चरुपे प्ररुपे प्रचर्यतीरहृदयशूला-नुपचर्यंति.
8 The sūtra is corrupt.
9 MS IV, 14, 8 : 248, 9.

मनूच्य प्रथमया यजेदिति व्यतिषजेत् ॥ १२ ॥ अवदानेषु सप्तमः ॥ १३ ॥ ग्रहाणामनुवाक्या उत्तरः प्रैषा उत्तरा याज्योत्तरास्तिस्रो ऽवदानानामुत्तमः स्विष्टकृतः पञ्चमो ऽनुयाजप्रैषा वायोधसस्य कवाद्वायो वसां प्रैषानर्धामहि[1] ॥ १४ ॥ तस्योत्तमस्त्वाप्रीरुत्तमो याज्यानुवाक्या उत्तमो याज्यानुवाक्या ॥ १५ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] अष्टमं खण्डम् ॥

समाप्तं द्वादशाहम् ॥

इति द्वितीयो[2] ऽध्यायः[3] ॥

---

1 The sūtra is corrupt.

2 The ms तृतीयो.

3 The ms adds समाप्तः

राज्ञो राजसूयः ॥ १ ॥ अग्निष्टोमेनेष्ट्वा चैत्र्यां पौर्णमास्याँ सप्तरात्रस्य
पुरस्तादिष्टिं निर्वपति ॥ २ ॥ अनुमत्या अष्टाकपालं निर्वपति[1] ॥ ३ ॥ ये प्रत्यञ्चः
शम्यामतिशीयन्ते तन्नैर्ऋतमेककपालम्[1] ॥ ४ ॥ उभौ सह शृतौ कुर्वन्ति[1] ॥ ५ ॥
नैर्ऋतेन पूर्वेण प्रचरन्ति[1] ॥ ६ ॥ वीहि स्वाहाहुतिं जुषाणं[2] इति गार्हपत्ये हुत्वा दक्षिणा
परेत्य स्वकृत इरिण एकोल्मुकं निधाय विस्रंसिकायाः काण्डाभ्यां नैर्ऋतं जुहो-
त्यङ्गुष्ठाभ्याँ वा—जुषाणा निर्ऋतिर्वेतु स्वाहेति[3] ॥ ७ ॥ वासः कृष्णं भिन्नान्तं दक्षिणा[4]
॥ ८ ॥ स्वाहा नमो य इदं चकारेति गार्हपत्ये हुत्वानुमतेन प्रचरन्ति ॥ ९ ॥ धेनुर्दक्षिणा
॥ १० ॥ अथ य उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्धृज्य
शुक्त्याभिजुहोति—इदमहममुष्यामुष्यायणस्य क्षेत्रियमवयज इति ॥ ११ ॥ तेनैवं[5] लोष्टे-
नापिदधाति—इदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीति ॥ १२ ॥ श्वो भूत आदि-
त्येभ्यो भुवद्वद्भ्य इति घृते चरुः[5] ॥ १३ ॥ पञ्चाग्रायणपष्ठ्यै[7] सरस्वत्यै चरुः सरस्वते
द्वादशकपाल इति मिथुनौ गावौ दक्षिणा ॥ १४ ॥ सँवत्सरं चातुर्मास्यैर्यथाविहि-
तमिष्ट्वेन्द्रतुरीयेण यजेत ॥ १५ ॥ सायं पञ्चेध्मीयेन ॥ १६ ॥ अपां न्ययनादपामा-
र्गानाहरन्ति ॥ १७ ॥ तान्त्सक्तून्कृत्वा दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं
निधाय पर्णमयेन स्रुवेण जुहोति—देवस्य त्वेति[8] ॥ १८ ॥ हतँ रक्षो ऽवधिष्म रक्ष इति
हुत्वानुनिगदति ॥ १९ ॥ वासो दक्षिणा ॥ २० ॥ आहवनीयं चतुर्धा प्रतिदिशँ
व्यूहति मध्ये पञ्चमम् ॥ २१ ॥ ये देवाः पुरःसद इति पर्यायैर्जुहोति मध्ये पञ्चमेन
॥ २२ ॥ इदमहँ रक्षो ऽभिसमूहामीति[9] समूह्याग्नये पुरःसदे स्वाहेति[9] पर्यायैः प्रदक्षिणं जुहोति
मध्ये च ॥ २३ ॥ रथः पञ्चवाही दक्षिणौ[10] ॥ २४ ॥ आभिरिष्टिभिर्यजते ऽनुमत्यै चरु-

1 Sūtras 3–6 are from MS II. 6. 1. 64. 1–2.

2 The ms वीहि स्वाहे जुषाणेति.

3 Cp MS ib 3–4

4 Identical with MS ib 4–5

5–5 MS ib 5–9.

6 ?

7 ? The ms पंचाग्रहयण· षष्ठ्यै.

8–8 Identical with MS II. 6. 3. 64. 18 sqq

9 MS II. 6. 3.

10 Identical with MS ib 65. 13–14.

रिति[1] पञ्च देविकाहवीँषि ॥ २५ ॥ मध्ये चरुं[2] धात्रे निर्वपत्यन्ते वा ॥ २६ ॥ पशुकामँ याजयेदिति[3] ब्राह्मणव्याख्यातम् ॥ २७ ॥ अन्तराणि त्रीणि सह हवीँषि पूर्वे त्रिषँयुक्तम् ॥ २८ ॥ अन्तराणि त्रीणि द्वितीयम् ॥ २९ ॥ अग्नीषोमीय एकादशकपाल [ इन्द्रासोमीय एकादशकपालः ] सौम्यश्चरुर्वभ्रुर्दक्षिणेति तृतीयम् ॥ ३० ॥ तैरिष्ट्वाग्नेये वैश्वानराय द्वादशकपालो वारुणश्च यवमयश्चरुः प्रादेश मात्रः ॥ ३१ ॥ हिरण्यमश्वश्च दक्षिणा[4] ॥ ३२ ॥ यो ज्योगामयावी वध्येत[5] ॥ ३३ ॥ बार्हस्पत्यश्चरुर्ब्रह्मणो गृहँ इत्येकादशं रत्निहवीँषि[6] ॥ ३४ ॥ महिष्या गृहे प्रचर्य भागश्चरुर्वसिन्या[7] गृहे विचित्तगर्भा पष्ठौही दक्षिणा ॥ ३५ ॥ नैर्ऋतश्चरुर्निर्विष्टतानां त्वायोधां[8] परिवंचतायां[9] गृहे ऽङ्गुष्ठपर्वमात्रँ श्रपयित्वा स्वकृत इरिणे प्रदरे वा जुहोति ॥ ३६ ॥ भागधातिकं भागदुघमित्येवाचक्षते[10] ॥ ३७ ॥ तस्य गृहे प्रचर्याध्वने स्वाहेति छागश्चैतस्यैं[11] गृहे जुहोति ॥३८॥ यथासमाम्नातमितरैर्नाममन्त्रैः प्रचरति[12] ॥ ३९ ॥ इन्द्रायँहोमुचे इति द्विविधे ॥ ४० ॥ मैत्राबार्हस्पत्यमभिषेचनीयस्य दीक्षणीयें[13] ॥ ४१ ॥ स्वयँरुग्णाया अश्वत्थशाखायाः पात्रं भवति[14] ॥ ४२ ॥ तस्मिन्श्वेतायाः श्वेतवत्साया दुग्धं भवति ॥ ४३ ॥ [15]तत्स्वयं मूर्छति ॥ ४४ ॥ स्वयं मथ्यते ॥ ४५ ॥ स्वयँविलीनमाज्यं भवति[15] ॥ ४६ ॥ अर्धँ[16] वेद्याः कुर्वन्त्यर्धँ स्वयंकृतम् ॥ ४७ ॥ अर्धं बर्हिषो दात्यर्धँ स्वयंदिनम् ॥ ४८ ॥ अर्धमिध्मस्य छिनत्त्यर्धँ स्वयमावपनम्[16] ॥ ४९ ॥ मित्राय जुष्टं बृहस्पतये जुष्टमिति निर्वपन्ति[17] ॥ ५० ॥ ये[18] स्वोदिष्टास्तण्डुलास्तं बार्हस्पत्यं चरुँ शृतं कुर्वन्ति ॥ ५१ ॥ तत्र तत्पात्रमपिधायाज्यमासिच्य ये स्वयविष्टास्तण्डुलास्तानावपन्ति ॥ ५२ ॥ उभौ सह शृतौ कुर्वन्ति[18] ॥ ५३ ॥ मैत्रेणानुत्तराधरौ श्रपयन्ति ॥ ५४ ॥ [19]मैत्रेण पूर्वेण प्रचरन्ति ॥ ५५ ॥ अश्वो मैत्रस्य दक्षिणा शितिपृष्ठो बार्हस्पत्यस्यैं सा वा श्वेता श्वेतवत्सा ॥ ५६ ॥ यस्य

1 MS II. 6 4 65 15
2 The ms चरुणा
3 MS IV. 3 5 44 8
4 The ms दक्षिणतो
5 ! Cp MS IV. 3. 7 46 18
6 MS II. 3 8 47 6-7
7 The ms इयेका द्वादश
8 !
9 ! The ms second hand परिवातायां
10 The ms first hand भागदुघ्तिमि॰.
11 ! Cp Āp XVIII 10 25 पालाकलस्य.
12 The ms प्रचर्यरति first hand, प्रचर्य चरति second hand
13 MS II 6 6 66 14
14 The ms ०यत् .
15 The sutra is identical with MS ib 15.
16-16 Identical with MS ib 67. 1-2
17 Cp MS ib 2
18-18 Identical with MS ib 2-4.
19 Probably मैत्रान् is to be struck off Cp Āp XVIII. 11 19.
20-20 Identical with MS ib 5.

राष्ट्रं शिथिरमिव स्यात्तमेतेन याजयेन्मैत्राबार्हस्पत्येन[1] ॥ ५७ ॥ पयसि वा सह मैत्रावरुणीमामिक्षाँ सँस्कुर्वन्ति ॥ ५८ ॥ सारस्वत्यो वसतीवर्यो भार्गवो होता दशपेये[2] ॥ ५९ ॥ अग्नीषोमीयस्य पुरोडाशमन्वग्नये गृहपतय[3] इत्यष्टौ देवस्वो[4] हवीँषि निर्वपति सर्वपृष्ठां[5] चाग्नये गायत्रायेति दशर्हविषम् ॥ ६० ॥

इति राजसूये [ तृतीये ऽध्याये ] प्रथम खण्डम् ॥

पुरस्तात्स्विष्टकृतः सविता त्वा प्रसवानामिति[3] हस्तमन्वारभ्य जपत्यमुष्या पुत्रमिति[3] यस्याः पुत्रो भवत्यमुष्याँ विशीति[3] यस्या विशो राजा भवति ॥ १ ॥ अत्रैवावेदत्त क्रमक्रमणमनुं मन्त्रानित्यधीयते ॥ २ ॥ उक्थ्यो ऽभिषेचनीयसँस्था ॥ ३ ॥ माध्यन्दिनीयान्सवनीयाननु मारुतमेकविँशतिकपालं निर्वपति ॥ ४ ॥ शुक्रज्योतिश्चेति[3] पर्यायैः कपालान्युपदधाति ॥ ५ ॥ द्वात्रिँशतं सहस्राणि चतुस्त्रिँशतमयुतं वा ददाति[6] ॥ ६ ॥ माहेन्द्रकाल आग्नीध्रे[7] पवित्राणि गृह्णाति ॥ ७ ॥ देवीरापो अपां नपादित्यपो ऽभिजुहोति ॥ ८ ॥ उत्तरोत्तरैः पर्यायैर्होमग्रहाणि सर्वत्र ॥ ९ ॥ वृषोर्मिरसीति[10] प्र[तीप]सारणीनाम् ॥ १० ॥ वृषसेनो ऽसीत्येन्वीपसारणीनाम् ॥ ११ ॥ अपा पतिरसीति[10] नदस्य[11] ॥ १२ ॥ अप्रहावरीः स्थेत्येनुपदासीनाँ स्थावराणाम् ॥ १३ ॥ परिवाहिणीः स्थेति[10] नीवाहस्यै ॥ १४ ॥ ओजस्विनीः स्थेत्येतीर्थे प्रवहन्तीनाम् ॥ १५ ॥ मान्दाः स्थेति[10] कूप्यानाम् ॥ १६ ॥ व्रजक्षित स्थेति[10] स्थावराणाम् ॥ १७ ॥ सूर्यवर्चस स्थेति[10] या आतपति वर्षति[12] ॥ १८ ॥ सूर्यत्वचसः स्थेति[10] यासु परिदृश्यते[13] ॥ १९ ॥ मरुतामोज स्थेत्यैपृष्ठे[9] ॥ २० ॥ वशा स्थेति[10] प्रुष्वाणाम्[14] ॥ २१ ॥ शक्वरीः स्थेति[10] गोमूत्रस्य ॥ २२ ॥ विश्वभृत स्थेति[10] पयसः ॥ २३ ॥ जनभृतै इति घृतस्य ॥ २४ ॥ अपामोषधीनामिति[10] मधुनः ॥ २५ ॥ षोडश गृहीत्वा देवीरापो

1 Identical with MS IV. 3. 9 48. 18.
2 The ms दशायेये दर्वा first hand, दशाये अर्वाग् second hand.
3 MS II. 6 6.
4 ? The ms देवस्थो first hand, देविका second hand.
5 ! The ms सर्वपृष्ठ्या.
6 The ms सह०.
7 ?
8 The ms ०शतसपूर्तं वा दधाति.
9 ? The ms ०ऐ first hand, ०ऐ second hand. Cp Āp XVIII. 12 14.
10 MS II 6. 7.
11 The ms तदस्य first hand, समुद्रियाणा second hand
12 Cp MS IV. 4. 1 50. 13.
13 The ms ०दृश्यति first hand, यासु रूपाणि परिदृश्यते second hand (after Āp XVIII 13. 11).
14 The ms पुष्पाणाम् So also MS ib 51. 1, which is to be similarly emended.

मधुमतीरिति[1] संसृजति ॥ २६ ॥ अनाधृष्टाः सीदतेत्यन्तरा होतुर्धिष्ण्यं ब्राह्मणाच्छंसिनश्च सादयति ॥ २७ ॥ अपो देवीरित्यभिमन्त्र्यानिमृष्टमसीति[1] शतकृष्णलं रुक्मं शतातृण्णमादाय तेन सह शुक्रा व शुक्रेण पुनामीति[1] पूयोवावदितो[2] ऽनुपजत्यस्यो[3] गायत्र्या श्री रुक्मेणोत्पूय[4] पालाशमाश्वत्थमौदुम्बरं नैयग्रोधमिति पात्राणि तेषु राजसूया[1] इत्यपो व्यानयति ॥ २८ ॥ रुद्र यत्त[1] इति शेषमाग्नीध्रीये हुत्वा सोमा इन्द्र[1] इति यजमानमामन्त्रयते ॥ २६ ॥ क्षत्रस्य योनिरसीति[5] तार्प्यं[6] यजमानः परिधत्ते क्षत्रस्योल्बमसीति[5] क्षौमं संशुद्धं क्षत्रस्य नाभिरसीत्युष्णीषम् ॥३० ॥ मधुतोक्ममिश्रमाशयति[7] ॥ ३१ ॥ पञ्चाशता दक्षिणमक्ष्याङ्क्ष्य पञ्चाशता वामम् ॥ ३२ ॥ अभ्यक्तमुदकं स्पर्शयति ॥ ३३ ॥ आवित्तो ऽग्निरित्यावेदयति ॥ ३४ ॥ अमुष्या पुन[8] इति व्याख्यातम् ॥ ३५ ॥ एष ते जनते राजेत्यनुदिशति जनतायै ॥ ३६ ॥ सोमो ऽस्माकं ब्राह्मणानां राजेत्युपांशु जपति ॥ ३७ ॥ इन्द्रस्य वज्रो ऽसीति[9] यजमानाय धनुः प्रयच्छति ॥ ३८ ॥ शत्रुबाधनाः स्थेति[9] त्रित्वशुमृदुसुराग्न्याणवतः ॥ ३९ ॥ तान्पात प्राञ्चमित्यभिमन्त्र्य मित्रो ऽसीति[9] दक्षिणं बाहुमुद्यच्छति वरुणो ऽसीति[9] सव्यम् ॥ ४० ॥ हिरण्यवर्णमुपस[9] इत्युद्यतबाहुं तिष्ठन्तमभिमन्त्रयते ॥ ४१ ॥ समाप्रतिष्ठन्तमन्वभिधावन्दिश उपतिष्ठते—समिधमातिष्ठेति[9] पर्यायैः ॥ ४२ ॥ सोमस्य त्विषिरसीति[9] व्याघ्रचर्म विवेष्टयासन्द्यामास्तृणाति ॥ ४३ ॥ प्रत्यस्तं नमुचेः शिर[9] इति बहिर्वेदि सते[10] सीसं पण्डगाय प्रत्यस्यति ॥ ४४ ॥ अवेष्टा दन्दशूका[9] इति लोहितायसं केशवापाय ॥ ४५ ॥ मृत्योः पाहीति[9] रजतं रुक्ममधस्ताद्व्याघ्रचर्म व्यपोहति दिद्विपाहीति[9] हरितं रुक्ममुपरिष्टादध्यूहति[11] ॥ ४६ ॥ अग्नये स्वाहेति[12] पर्यायैर्द्वादश पार्थानि हुत्वा मारुतस्य दैवतेन प्रचरति ॥ ४७ ॥ सोमस्य त्वा द्युम्नेनेत्येनमासन्द्यामूर्ध्वबाहुं तिष्ठन्तमभिषिञ्चति पालाशेन ब्राह्मण आश्वत्थेन वैश्य औदुम्बरेण भ्रातृव्यो यो जन्यो मित्रं स नैयग्रोधेन[13] ॥ ४८ ॥ रुक्मं प्रत्यञ्चं सिञ्चति ॥ ४९ ॥ पालाशे शेपान्समवनीय कृष्णविषाणया वासांसि विस्रस्येन्द्रस्य योनिरसीति[12] वास

1 MS II, 6 8.

2 ! The ms second hand उत्पूयो भावा दितो.

3 ! The ms second hand ॰पजति.

4 ! The ms गायत्र्या रिरुणायूप first hand, गायत्र्या यूप second hand

5 MS II 6. 9.

6 The ms ॰मासादयति.

7 The ms दक्षिणामिश्रको (दक्षिणमक्षि ए second hand) क॰.

8 !

9 MS II, 6 10.

10 ! The ms शते.

11 ! The ms ॰परिष्टादप्युपहाति.

12 MS II. 6. 11

13 यो जन्यो॰ is identical with MS IV. 4. 2 52 9

उपादत्ते ॥ ५० ॥ समावश्रन्निति[1] समुन्मार्ष्टि ॥ ५१ ॥ इन्द्रस्य वज्रो ऽसीति[1] रथमुपावहरति ॥ ५२ ॥ मित्रावरुणयोस्त्वेति[1] युनक्ति ॥ ५३ ॥ विष्णोः क्रमो ऽसीति[1] रथमाक्रामति[2] ॥ ५४ ॥ मरुतां प्रसवे[3] जयेत्यारुह्य जपति ॥ ५५ ॥

इति राजसूये [ तृतीये ऽध्याये ] द्वितीयं खण्डम् ॥

अमावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥

इति त्रिष्टुभा ब्रह्मान्वेति[4] ॥ १ ॥ स्तुत्वा राजन्यं जिनाति[5] ॥ २ ॥ तस्मै तामिषुमस्यति[6] ॥ ३ ॥ तदस्यामोघायास्तमभूत् ॥ ४ ॥ आप्तं मनं इति वृत्तं[7] परिगृह्य याति[8] ॥ ५ ॥ एष वज्र[1] इति पत्न्यै धन्वार्त्निं[9] प्रयच्छति[10] ॥ ६ ॥ उपददाति[11] ॥ ७ ॥ इयदसीति[12] राजतं रुक्ममभिमृशति युङ्ङसीति[12] हरितमूर्गसीत्यौदुम्बरम्[12][13] ॥ ८ ॥ मित्रो ऽसीति[12] दक्षिणं बाहुमवहरति वरुणो ऽसीति[12] सव्यम् ॥ ९ ॥ सदसीति[12] हस्तावामिक्षायाम् ॥ १० ॥ परशूना मन्युरसि तदेव मे मन्युर्भूयात् ॥ [14]नमो मात्रे पृथिव्यै इति वाराही उपानहा अभ्यवरोहति[14] ॥ ११ ॥ प्रति त्यन्नाम राज्यमधायीति[12] निमृष्टे[15] ॥ १२ ॥ तृणाधीता समासन्दीमास्थार्य[16] दक्षिणत आहवनीयस्य निदधाति स्योनासि सुषदेति[12] ॥ १३ ॥ विष्णोः क्रान्तमसीत्यासन्दीं क्रामति ॥ १४ ॥ स्योनमासीद सुषदामासीदेत्यारोहन्तमनुमन्त्रयते[12] निषसाद धृतव्रत[12] इत्यारूढम् ॥ १५ ॥ अग्नये स्वाहेति[12] रथविमोचनीयं जुहोति ॥ १६ ॥ हंसः शुचिषदित्यादधाति[12] ॥ १७ ॥ सह सारथिना रथमादधाति[17] ॥ १८ ॥ आहितादवरोहति ॥ १९ ॥ ब्रह्मांस्त्वं ब्रह्मासीति[12] यजमानो ऽध्वर्युमामन्त्रयते ब्रह्माणं होतारमुद्गातारम् ॥ २० ॥ सवितासि सत्यसवे इति पर्यायैः प्रत्याहुः ॥ २१ ॥ एष वज्र[12] इति ब्रह्मा स्फ्यं राज्ञे प्रयच्छति राजा

1 MS II 6, 11.
2 The ms रथापक्रा॰ first hand, रथमपक्रा॰ second hand.
3 The ms प्रसवेन.
4 The closing words are from MS IV. 4, 5 55, 9.
5 Cp MS ib 17.
6 Identical with MS ib 18.
7 ? Perhaps वृत्रं "the enemy."
8 Perhaps परिगृह्यायाति.
9 ? The ms and the Saṃhitā (ib 20) धन्वार्तिम्.
10 Identical with MS ib 19 sqq
11 ?
12 MS II 6, 12.
13 The ms ॰त्युदु॰.
14–14 Identical with MS IV 4 6 56. 10–11.
15 ? The ms ॰धायि निमृष्टे निम्रेष्टे. Cp Āp XVIII. 12. 9 ॰राज्यमधायीति वारुणीभ्यां यजमानो मुखं विमृष्टे.
16 Hopelessly corrupt
17 From MS ib 57, 4 (आदधाति to be emended ?)

प्रतिहिताय प्रतिहितः सेनान्ये सेनानी संग्रहीत्रे संग्रहीता सूताय सूतो ग्रामण्ये ग्रामणीरत्तायापाय ॥ २२ ॥ तेन स्फ्येनाधिदेवनं कुर्वन्ति[1] ॥ २३ ॥ तत्र पष्ठौहीं[1] विदीव्यन्ते ब्राह्मणो राजन्यो वैश्यः शूद्रः ॥ २४ ॥ ओदनं राजा प्रतिश्रावयति[2] ॥ २५ ॥ ब्राह्मणश्चतुःशतमच्यानपच्छिद्योद्विशें[3] राज्ञे[4] इति राज्ञे प्रयच्छति ॥ २६ ॥ तद्राजा कृतं विचिनोति[5] ॥ २७ ॥ ततः पश्चात्तान्प्रयच्छन्नाह—दिशो ऽभ्यभूदयमिति[6] ॥ २८ ॥ क्षेत्रं ददाति[6] ॥ २९ ॥ वरं वृणीते[6] ॥ ३० ॥ मङ्गल्यनाम्नो ह्वयति[6]—सुश्लोका सुमङ्गला सत्यराजान इति ॥ ३१ ॥ ऋचो गाथाश्च होता शंसति हिरण्यकूर्च आसीनः ॥ ३२ ॥ हिरण्यकूर्चे हिरण्यकशिपुनि वासीनो ऽध्वर्युः प्रतिगृणाति—ओमित्यृचु[7] तथेति गाथासु ॥ ३३ ॥ परिधानीयां संपाद्य मैत्रावरुण्यामिक्षया प्रचरति ॥ ३४ ॥ सद्यस्त्विष्टकृदिडं मारुतस्य च ॥ ३५ ॥ अत्रैव रुक्मौ[8] ददाति ॥ ३६ ॥ अभिषेकशेषं गार्हपत्य इति प्रतिहितस्य वयं स्याम पतयो रयीणामिति[9] जपित्वा ॥ ३७ ॥ समानमावभृथात् ॥ ३८ ॥

इति राजसूये [ तृतीये ऽध्याये ] तृतीय खण्डम् ॥

अपां नप्त्रे स्वाहेत्यैवपा[म]न्ते ऽवभृथे जुहोत्यूर्जो नप्त्रे[10] इति दर्भस्तम्बे घर्मीकवपायां धामये गृहपतये[11] इति गार्हपत्ये ॥ १ ॥ ऐन्द्री सूतवशानुबन्ध्या ॥ २ ॥ नैवारः पशुपुरोडाशः ॥ ३ ॥ पात्रीस्थाने सूनाया अधि[12] चतुष्पद्या निर्वपति ॥ ४ ॥ पश्चात्प्राग्वंशस्य विहारं विहृत्य सावित्रो ऽष्टाकपाल[11] इतिप्रभृतयः सप्त संसृपः ॥ ५ ॥ ताभिरन्वहं यजते ॥ ६ ॥ पूर्वस्याः पूर्वो ऽपरस्यां[13] गार्हपत्यः ॥ ७ ॥ प्राग्वंशे त्वाष्ट्रः[14] ॥ ८ ॥ तस्मिन्संस्थिते दशपेयाय दीक्षते ॥ ९ ॥ न केशश्मश्रु वपति ॥ १० ॥ अप्सुदीक्षा श्वेतान्द्वादश पुण्डरीकांश्च यजमानो बध्नीते ॥ ११ ॥ सद्यो जातं[15] विसृजति ॥ १२ ॥ सद्यो राजानं क्रीणाति दशभिः साण्डैर्वत्सतरैर्निस्यैश्च ॥ १३ ॥

1 Identical with MS IV 4 6 57, 9-10

2 ! The ms प्रसुश्रावयति first hand, प्रसुश्रापयति second hand

3 ! The ms ब्राह्मण चतुःशतं मध्येहतभिन्न राज्ञे इति राज्ञे first hand, °शतं अच्छनपथिवृ'हे उद्विशं second hand

4 MS ib 12

5 ! The ms विवी (विमी second hand) मीति.

6 Identical with MS ib 13-16

7 The ms °मित्युके.

8 The ms रुक्मी first hand, रुक्मं second hand.

9 Here some words have fallen out

10 MS II. 6. 12 72. 7.

11 MS II 6 13

12 ! The ms सूनाय अभि.

13 ! The ms पूर्वस्या यथापिरस्या first hand, पूर्वस्या आहवनीय अपरस्या second hand.

14 The ms त्वष्ट्र first hand, चेष्ट्रा second hand

15 The ms first hand श्वेत.

16 ! प्राचं ?

पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेन्मध्ये सोम्यमुपरिष्टाद्वैष्णवम् ॥ १४ ॥ अग्निष्टोमो दशपेयसंस्था ॥ १५ ॥ शतं ब्राह्मणाः सोमं पिबन्ति दश दशैकैकं चमसम् ॥ १६ ॥ दशं[1] पृच्छति कस्ते पितामहः कस्ते पितामह इति स्त्रियश्च ॥ १७ ॥ येषां[2] दशसु न मीमाँसेरँस्त ऋत्विजो यसर्पिणश्चे[3] पिबा[4] किं ब्राह्मणस्येत्युक्त्वा प्रसर्पति[5] ॥ १८ ॥ दक्षिणाकाले रुक्मो होतुः स्रगुद्गातुः प्रावेपा अध्वर्योरिति[6] ब्राह्मणव्याख्यातम् ॥ १९ ॥ साण्डस्त्रिवत्सो ग्रावस्तुतो वत्सतर्युन्नेतुरजः सुब्रह्मण्यस्य ॥ २० ॥ न प्रसर्पकेभ्यो[8] ददाति ॥ २१ ॥ आयन्तीयं ब्रह्मसाम ॥ २२ ॥ आभिषेचनीयदशपेयौ वत्सतरापवर्गौ[10] ॥ २३ ॥ पूर्णमास्यां यजनीये ऽहन्यभिषेचनीयाय दीक्षते ॥ २४ ॥ द्वादश मासान्दीक्षितो भवति ॥ २५ ॥ उपसत्सु नाश्नाति ॥ २६ ॥ तिस्र उपसदः ॥ २७ ॥ चतुर्थ्यां सौम्यमहः ॥ २८ ॥ तदहः सँसृपां प्रथमां दशम्यामुत्तमाम् ॥ २९ ॥ सा प्रथमा दशाहानि यस्योपसदः[11] ॥ ३० ॥ त्रयोदश्यां सौम्यमहस्तदहर्दिशामवेष्टिभिः ॥ ३१ ॥ वैष्णवादुत्तराणि पञ्च हवींषि[12] ॥ ३२ ॥ तत्र ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेत्[13] ॥ ३३ ॥ अन्नकामो यजेतेति[14] ब्राह्मणव्याख्यातम् ॥ ३४ ॥ सायं पूर्वाः प्रयुज उत्तराणि हवींषि[15] ॥ ३५ ॥ दक्षिणो रथवाहनवाहो दक्षिणा[16] ॥ ३६ ॥ षडुत्तराणि प्रातः ॥ ३७ ॥ सव्यो रथवाहनवाहो दक्षिणा[16] ॥ ३८ ॥ पौर्णमास्यामग्निहोत्रं जुहोति ॥ ३९ ॥ सँवत्सरमग्निहोत्रं हुत्वा केशवपनीयाय दीक्षते ॥ ४० ॥ प्रतीचीनस्तोमो[18] ऽतिरात्रः षोडशिकः संस्था ॥ ४१ ॥ अनुबन्ध्यायां हुतायामग्निचयवद्दक्षिणस्यां वेदिश्रोण्यामासन्धामासीनस्य ये केशिनः प्रथमे सत्रमासतेति[20] प्रवपति ॥ ४२ ॥ तस्मिँस्थिते पशुबन्धेन यजते ॥ ४३ ॥ मारुती पृश्निः पष्ठौही[21] गर्भिण्यादित्याजा मल्हा

1 The ms दशान्
2 The ms second hand एषा
3 ? The ms second hand ये सर्पिणश्च
4 ? The ms second hand पिब
5 The entire sūtra is unintelligible
6 MS IV 4 8 59 1-3
7-7 The ms वत्सतर्यं नेतुरजसोब्राह्मणस्य न first hand, वत्सतर्यं नेष्टु ऋषभो ब्राह्मणाच्छंसिने second hand
8 ? The ms सर्पतोश्चो first hand, सर्पतो ऽश्व second hand
9 Cp MS IV 4 9 59 15
10 ?
11 ? The ms first hand दशान्यै यस्योपसत्
12 MS II 6 13 72 14 sqq
13 But for the initial तत्र the entire sutra is identical with MS IV 4 9 60 11-12
14 MS ib 10
15 MS II 6 13 72 17 sqq
16 Identical with MS ib 73 1 2, 3 4
17 Based on MS IV 4 9 61 4-5
18 The ms °सोमो Cp MS IV 4 10 62-11
19 ? The ms अभिश्रयवा
20 The verse does not occur in MS
21 The ms adds दक्षिणा

गर्भिणी[1] ॥ ४४ ॥ सवित्रे प्रसवित्र[2] इति सत्यदूतास्त्रीणि हवींषि ॥ ४५ ॥ दण्ड उपानहौ शुष्कदृतिरिति दक्षिणा दूताय[3] प्रयच्छति ॥ ४६ ॥ पशुबन्धेन यो यजते यो ऽस्य सचन्तजातीयो[6] राजा तस्मै प्रहिणोति—अभ्यपिहि राजाभूम् ॥ अस्म्यहमई इति ॥ ४७ ॥ व्युष्टिद्विरात्रेण यजते ॥ ४८ ॥ अग्निष्टोमः प्रथममहरायुरतिरात्र उत्तरम् ॥ ४९ ॥ क्षत्रस्य धृतिमाग्निष्टोमेनेष्टिभिर्यजेत देविकाभिर्देवसूभिर्वैश्वानरवारुण्या सौत्रामण्या सौत्रामण्या[8] ॥ ५० ॥

इति राजसूये [ तृतीये ऽध्याये ] चतुर्थं खण्डम् ॥

इति तृतीयो ऽध्याय ॥

इति राजसूयः समाप्तः ॥

---

1 Identical with MS II 6 13 73 4 In its brahmana (IV 4 9) MS has also मलिहा

2 MS ib 5

3 See MS IV 4 9, 61 2

4 See MS II 6 13 73 6 7

5 The ms हूताय

6 !

7 MS IV 4 9 61 3-4

8 The sutra is hopelessly corrupt.

9 The ms इति राजसूये चतुर्थो

पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेन्मध्ये सौम्यमुपरिष्टाद्वैष्णवम् ॥ १४ ॥ अग्निष्टोमो दशपेयसँस्था ॥ १५ ॥ शतं ब्राह्मणा[1] सोम पिबन्ति दश दशैकैकं चमसम् ॥ १६ ॥ दशे पृच्छति कस्ते पितामहः कस्ते पितामह इति स्त्रियश्च ॥ १७ ॥ येषां[2] दशसु न मीमाँसेरँस्त ऋत्विजो यसर्पिणश्चै[3] पिवा[4] किं ब्राह्मणस्येत्युक्त्वा प्रसर्पति[5] ॥ १८ ॥ दक्षिणाकाले रुक्मो होतु सगुद्रातु प्रावेपा अध्वर्योरिति[6] ब्राह्मणव्याख्यातम् ॥ १९ ॥ साण्डक्लिवत्सो प्रावस्तुतो [7]वत्सतर्युन्नेतुरजः[7] सुब्रह्मण्यस्य ॥ २० ॥ न प्रसर्पकेभ्यो[8] ददाति ॥ २१ ॥ आयन्तीयं ब्रह्मसाम[9] ॥ २२ ॥ अभिषेचनीयदशपेयौ वत्सतरापवर्गौ[10] ॥ २३ ॥ पूर्णमास्यां यजनीये ऽहन्यभिषेचनीयाय दीक्षते ॥ २४ ॥ द्वादश मासान्दीक्षितो भवति ॥ २५ ॥ उपसत्सु नाश्नाति ॥ २६ ॥ तिस्र उपसदः ॥ २७ ॥ चतुर्थ्यां सौम्यमहः ॥ २८ ॥ तदह सँसृपां प्रथमां दश म्यामुत्तमाम् ॥ २९ ॥ सा प्रथमा दशाहानि यस्योपसद.[11] ॥ ३० ॥ त्रयोदश्यां सौम्यमहस्तदहर्दिशामवेष्टिभिः ॥ ३१ ॥ वैष्णवादुत्तराणि पञ्च हवीँषि[12] ॥ ३२ ॥ तत्र ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिँ हुत्वाभिघारयेत्[13] ॥ ३३ ॥ अन्नकामो यजेतेति[14] ब्राह्मणव्याख्यातम् ॥ ३४ ॥ सायं पूर्वाः प्रयुज उत्तराणि हवीँषि[15] ॥ ३५ ॥ दक्षिणो रथवाहनवाहो दक्षिणा[16] ॥ ३६ ॥ षडुत्तराणि प्रात. ॥ ३७ ॥ सव्यो रथवाहनवाहो दक्षिणा[17] ॥ ३८ ॥ पौर्णमास्यामग्निहोत्रं जुहोति ॥ ३९ ॥ सँवत्सरमग्निहोत्रँ हुत्वा केशवपनीयाय दीक्षते ॥ ४० ॥ प्रतीचीनस्तोमो[18] ऽतिरात्र॰ षोडशिकः सँस्था ॥ ४१ ॥ अनुबन्ध्यायाँ हुतायामग्निचयवं[19] दक्षिणस्याँ वेदिश्रोण्यामासन्द्यामासीनस्य ये केशिन प्रथमे सत्रमासतेति[20] प्रवपति ॥ ४२ ॥ तस्मिन्सँस्थिते पशुबन्धेन यजते ॥ ४३ ॥ मारुती पृश्नि पष्ठौही[21] गर्भिण्यादित्याजा मलिहा

1 The ms दशान्

2 The ms second hand एषा

3 ? The ms second hand ये सर्पिणश्च

4 ? The ms second hand पिब

5 The entire sūtra is unintelligible

6 MS IV 4 8 59 1-3

7-7 The ms वत्सतर्यै नेतुरजसोब्राह्मणस्य न first hand, वत्सतर्यै नेष्टु ऋषभो ब्राह्मणाच्छसिने second hand

8 ? The ms सर्पतोश्चो first hand, सर्पतो ऽश्च second hand

9 Cp MS IV 4 9 59 15

10 ?

11 ? The ms first hand दशान्यै यस्योपसत्

12 MS II 6 13 72 14 sqq

13 But for the initial तत्र the entire sutra is identical with MS IV 4 9 60 11-12

14 MS ib 10

15 MS II 6 13 72 17 sqq

16 Identical with MS ib 73 1-2, 3 4

17 Based on MS IV 4 9 61 4-5

18 The ms ॰सोमो Cp MS IV 4 10 62-11

19 ? The ms अभिश्चयवा

20 The verse does not occur in MS

21 The ms adds दक्षिणा

केणोदूहेनोदूहति ॥ २६ ॥ वेतसशाखानुबद्धा भवति ॥ २७ ॥ अर्धं स इन्द्रदमा-
मावर्तयन्नश्व माजयन्त्यश्वस्तोक्याभिः ॥२८॥ विभूर्मात्रेत्यश्वमयमनुजनि ॥२९॥ देवा
आशापाला इति परिददाति ॥ ३० ॥ शतं तल्प्या राजपुत्राः कवचिनो ऽनिवर्तयन्तो
ऽश्वं रक्षन्ति त्रिदशानुपरिक्षिणः[4] कृत्वा ॥ ३१ ॥ यद्यश्वस्य वामां[5] स गृहमा-
होमुचे इति मृगारेष्टिमश्वस्य वेरे[6] निर्वपति ॥ ३२ ॥ पुरस्तात्स्विष्टकृतो दिवाय
शाहेत्यनुवाकेनाश्वचरितां[7] जुहोति ॥ ३३ ॥ सावित्रो ऽष्टाकपालः पूर्वाह्णे सवित्रे
प्रसवित्र एकादशकपालो मध्यन्दिने सवित्र आसवित्र द्वादशकपालो ऽपराह्णे ॥ ३४ ॥
संस्थितासु परिसवमाचष्टे होता हिरण्यफलक आसीनः ॥ ३५ ॥ हिरण्यकशि-
कशिपुनि वासीनो ऽध्वर्युः प्रतिगृणाति—ओमित्यृक्षु तथेति गाथासु ॥ ३६ ॥ परि-
धानीयां सपाद्य ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यद अन्यमदो दिनि
मिश्रास्तिस्रो गाथा ॥३७॥ सायं जुहोतीह धृतिरिति[10] पर्यायै ॥३८॥ राजन्यो वीणा-
गाथी गायतीत्ययुध्यथा इत्यमुं संग्राममजयन् ॥ अदो वीर्यमकरोदिति मिश्रास्तिस्रो गाथाः
॥ ३९ ॥ इष्टिप्रभृतिगाथार्थे[12] ॥ ४० ॥ सकृदश्वचरितां[13] जुहोतीष्टिरेवं ब्राह्मणगानं
च ॥ ४१ ॥ एकादशे मासि सावित्रं[14] प्रत्युत्थासंभरणं क्रियेतामावास्यायाः [16]संव-
त्सरः ॥ ४२ ॥ तमासमाप्याति ज्योत्स्नस्य यद्वाग्र थिभि. सावित्रमिति[16] जुहोति
॥ ४३ ॥ वीणागाथिभ्यां शते ददात्यनसी च युक्ते[17] ॥ ४४ ॥ सप्तम्यामष्टाकपा-
श्ववायाँ[18] वडवायाँ[19] सप्तम्यां पञ्च पशुनेष्ट्वा षष्ठ्यां दीक्षते ॥ ४५ ॥ त्रैधातव्यामि
तिराश्रस्यै दीक्षणीया ॥ ४६ ॥ समानमा दीक्षाहुतिभ्यो भुङ्क्ते[20] ॥ ४७ ॥ चतस्र
आध्वरिकीः सप्ताहं जुहोति काय स्वाहेति[21] चार्धानुवाकस्य मिश्रमिश्रानन्यहं पूर्णा-
हुतिवर्जम् ॥ ४८ ॥ आध्वरिकीर्हुत्वाकूतमग्निमिति[20] षडाग्निकीर्जुहोति शेषं चाश्व
मेधिकीनामन्ते पूर्णाहुतीनाम् ॥ ४९ ॥ आ ब्रह्मन्निति[22] ब्रह्मोद्यं प्रवर्त्यमानमनुमन्त्र

1 MS III 12 2
2-2 ? The ms ०न्त्याश्वस्तोकास्त मात्रादिभू०
3 MS III 12 4
4 ?
5 MS III 15 11 181 1
6 MS III 12 3
7 The ms second hand चरितानि
8 The ms ०युक्तम्
9-9 ? The ms गाथाया स०.
10 MS III 12 4 161 12
11 The ms first hand adds इत्ययंद्द्या
12 ? The ms गाथा च The sutra is in completo
13 ? The ms second hand ०चरितानि
14 ? The ms ०ष्टिदेवा
15 ? The ms ०म first hand, ०मे second hand
16-16 Hopelessly corrupt
17 ? The ms ददात्यगा च सयुक्ते
18 ? The ms ०ते
19 MS III 12 5 161 14
20 MS II 7 7 82 7
21 Cp Āp XX 8 5 9
22 MS III 12 6

राजा विजित्याश्वमेधेन यजेत ॥ १ ॥ पुण्यनामधेयं देवयजनमध्यव-
स्यति ॥२॥ ऋषभस्तूपरः सर्वरूपः ॥ ३ ॥ तेन प्राजापत्येन ॥ ४ ॥ यदृत्यामन्तं[1]
गिरिरिददार्य परिवहेयुस्तत्र यजेत ॥ ५ ॥ अमावास्यायां ब्रह्मौदनँ श्रपयति पूर्व-
स्याम् ॥ ६ ॥ उत्तरस्यां पर्यग्निं कृत्वा[1] केशश्मश्रु वापयित्वाहतँ वास आच्छाद्याह-
वनीये वैतसं कटमुपसमाधाय नमस्कारैरुपतिष्ठेत द्रष्ट्रे नम उपद्रष्ट्रे नम ख्यात्रे नम
इत्युपस्थानान्यधीयते ॥ ७ ॥ हिरण्यगर्भ[2] इत्यष्टौ पूर्णाहुतीर्हुत्वास्तमयमनु वाचँ
यच्छति[3] ॥ ८ ॥ रात्रीँ वाग्यतो भवति ॥ ९ ॥ अपदातीनृत्विजः समानयन्ति
॥ १० ॥ चतुष्टयीष्वप्सु ब्रह्मौदनँ श्रपयति ॥ ११ ॥ तं महर्त्विजः प्राश्नन्ति ॥ १२ ॥
तेभ्यः शतमानं ददाति ॥ १३ ॥ द्वादशारत्निँ रशनां त्रयोदशारत्निँ वा मौञ्जीं
दर्भमयीँ[4] वा ब्रह्मौदने पर्यस्तामिमामगृभ्णन्नित्यश्वाभिधानीमादायाभिधा असी-[5]
त्यश्वमभि निदधाति कृष्णपिशङ्गं त्रिहायणँ सोमपँ सोमपयोः पुत्रम् ॥ १४ ॥ स्वगा
त्वा देवेभ्य इति ब्रह्माणमामन्त्रयते ॥ १५ ॥ त बधान देवेभ्य इति ब्रह्मा प्रत्याह ॥ १६ ॥
शतैः सह प्रोक्षति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाताभिषे-
क्याणाँ राजपुत्राणाँ शतैः सहाध्वर्यू राज्ञां ब्रह्मा सूतग्रामणीनाँ होता क्षत्तृसंग्र
हीतॄणामुद्गाता ॥ १७ ॥ प्रजापतये त्वा जुष्टं प्रोक्षामीति[5] पर्यायैः ॥ १८ ॥ सर्वे पञ्चमेन[6]
॥ १९ ॥ यः पितुरनुजायाः पुत्रः [स] पुरस्तादश्वं तीर्थाय नयति [यो] मातुरनु-
जायाः पुत्रः स पश्चादन्वेति ॥ २० ॥ सैध्रकं मुसलमादाय पौँश्चलेयः पश्चादन्वे-
ति ॥ २१ ॥ अनुनयन्ति श्वानं चतुरक्षम् ॥ २२ ॥ तीर्थान्ते पदतो[1] ऽभ्यश्वस्य
नयति ॥ २३ ॥ यो अर्वन्तं जिघाँसतीति[5] पौँश्चलेयो मुसलेन श्वानँ हन्ति ॥ २४ ॥
परो मर्तः पर. श्वेति[5] श्वानमश्वस्याधस्पदमपप्लावयति ॥ २५ ॥ उत्क्रामन्तमश्वमैषी-

1 ?

2 MS II, 13, 23 (containing 8 verses)

3 Thus emended after Mān The ms °हुत्वास्तमयमनुकं वाचयति.

4 The ms has nominatives

5 MS III, 12. 1.

6 I e with the fifth formula सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि ib 160, 5-6

केणोदूहेनोदूहति ॥ २६ ॥ वेतसशाखानुबद्धा भवति ॥ २७ ॥ अमये स्वाहेत्यनुवाक-मावर्तयन्नश्व मार्जयन्त्य[2]श्वस्तोक्याभिः ॥२८॥ विभूर्मात्रेत्य[2]श्वमवसृजति ॥२९॥ देवा आशापाला इति परिददाति ॥ ३० ॥ शतं तल्प्या राजपुत्राः कवचिनोऽनिवर्तयन्तोऽश्वं रक्षन्ति त्रिदशानुपरिक्षिणः[5] कृत्वा ॥ ३१ ॥ यद्यश्वस्य तासां[5] च शङ्केताग्नये [5]होमुर्वे इति मृगारेष्टिमश्वस्य वेरे[5] निर्वपति ॥ ३२ ॥ पुरस्तात्स्विष्टकृतो हिंकाराय [6]यादेत्यनुवाकेनाश्वचरितां[7] जुहोति ॥ ३३ ॥ सावित्रोऽष्टाकपाल· पूर्वाह्णे सवित्रे प्रसवित्र एकादशकपालो मध्यन्दिने सवित्र आसवित्र द्वादशकपालोऽपराह्णे ॥३४॥ संस्थितासु परिप्लवमाचष्टे होता हिरण्यफलक आसीनः ॥ ३५ ॥ हिरण्यफलके कशिपुनि वासीनोऽध्वर्युः प्रतिगृणाति—ओमित्यृर्चु तथेति गाथासु ॥ ३६ ॥ परि-धानीयां संपाद्य ब्राह्मणो वीणागाथी गायतीत्ययदा इत्ययजथा इत्यद कल्पमकरोदिति मिश्रास्तिस्रो गाथा ॥३७॥ सायं[9] जुहोतीद्धृतिरिति[10] पर्यायै·॥३८॥ राजन्यो वीणा-गाथी गायतीत्ययुध्यथौ इत्यमुं सङ्ग्राममजयत् ॥ अदो वीर्यमकरोदिति मिश्रास्तिस्रो गाथाः ॥ ३९ ॥ इष्टिप्रभृतिगाथा[12]र्थे ॥ ४० ॥ सकृदश्वचरितां[13] जुहोतीष्टिरेवं ब्राह्मणानं च ॥४१॥ एकादशे मासि सावित्रं[15] प्रत्युखासंभरणं क्रियेतामावास्यायाः [16]संव त्सरः ॥ ४२ ॥ तमासमाप्याति ज्योत्स्नस्य यद्वाश्व त्रिभिः सावित्रमिति[16] जुहोति ॥ ४३ ॥ वीणागाथिभ्यां शते ददात्यनसी च युक्ते[17] ॥ ४४ ॥ सप्तम्यामसंप्राहत्या श्वचार्यौ[18] वडवार्यौ[18] सप्तम्यां पञ्च पशुनेष्ट्वा पष्ठ्यां दीक्षते ॥ ४५ ॥ त्रैधातव्यानि-तिरात्रस्यै दीक्षणीया ॥ ४६ ॥ समानमा दीक्षाहुतिभ्यो भुञ्जीत ॥ ४७ ॥ चतस्र आध्वरिकीः सप्ताहं जुहोति काय स्वाहेति[19] चार्धानुवाकस्य मिश्रमिश्रानन्वहं पूर्णा हुतिवर्जम् ॥ ४८ ॥ आध्वरिकीर्हुत्वाकूतमग्निमिति[20] षडाग्निकीर्जुहोति शेषं चाश्व मेधिकीनामन्ते पूर्णाहुतीनाम्[21] ॥४९॥ आ ब्रह्मन्निति[22] प्रक्षेपां[5] प्रवर्त्यमानमनुमन्त्र

1 MS III 12 2
2-2 ? The ms ॰न्त्याश्वस्तोकास्ताभावादिभू॰
3 MS III 12 4
4 ?
5 MS III 15 11 181 1
6 MS III 12 3
7 The ms second hand चरितानि
8 The ms ॰त्युक्स्
9-9 ? The ms गाथाया स॰.
10 MS III 12 4 161 12
11 The ms first hand adds इत्ययद्वा
12 ? The ms गाथा च The sutra is in complete
13 ? The ms second hand ॰चरितानि
14 ? The ms ॰ष्टिदेवा
15 ? The ms ॰त्र first hand, ॰त्रे second hand
16-16 Hopelessly corrupt
17 ? The ms ददात्यसा च सयुक्ते
18 ? The ms ॰ते
19 MS III 12 5 161 14
20 MS II 7 7 82 7
21 Cp Āp XX 8 5-9
22 MS III 12 6

यते ॥ ५० ॥ पौर्णमासी प्रथमा दीक्षाणामेकादशी चापरपक्षस्य चतस्रो ऽवशिष्यन्ते ॥ ५१ ॥ ता उपसदो ऽष्टौ चोत्तरस्य पक्षस्य नवमदशमैकादशामिति सौम्यान्यहानि ॥ ५२ ॥ त्रिस्तावा वेदिः ॥ ५३ ॥ एकविंशतिर्यूपा राज्जुदालो[1] ऽग्निष्ठ एकविंशत्यरत्निः पौतुद्रवावभितः ॥ ५४ ॥ इतरेषाँ वा[2] षद् पालाशान्षड्वैल्वान्संमिनोति यथैकादशिना[3] ॥ ५५ ॥ अग्नीषोमीयस्य पशुपुरोडाशमन्वमये गृहपतय इत्यष्टौ[4] देवस्वो[5] हवीँषि निर्वपति सर्वपृष्ठां[6] चाग्नये गायत्रायेति[7] दशहविषम् ॥५६॥

इत्यश्वमेधे [चतुर्थे ऽध्याये] प्रथम खण्डम् ॥

अग्निष्टोमः प्रथमा[8] सँस्था ॥१॥ पत्नीसँयाजान्ते सँस्थिते ऽस्तमिते ऽन्नानि प्रजुहोति ॥ २ ॥ यद्यसँस्थितमत्युभौ चेदेकादशः सँस्थापयेदेकदेशो ऽन्नानि जुहुयात्[9] ॥ ३ ॥ [10]सफलाथो जाना कुसुमसर्पिः पयोगुडान्मृष्टशान्तिकरणानि पृथुकानि मध्वापमिति[10] खादिरैः स्रुवैः प्रत्यन्नं[11] जुहुयात् ॥ ४ ॥ आ ब्रह्मन्नित्यनुवाकेनाज्यँ सर्वमितरैः[12] ॥ ५ ॥ एकस्मै स्वाहा द्वाभ्याँ स्वाहेत्यै[13]कोनशताद्[14] द्वाभ्याँ स्वाहा त्रिभ्यः स्वाहेत्यै[15]कशतादयुग्भिराज्यं जुहोति युग्मैरन्नानि ॥ ६ ॥ एतेन धर्मेणारभ्य माष्टाभ्यो नाभ्यं[16] उपक्रमेतानवस्थेदश्यो[17] दशभ्य स्वाहा विँशतये स्वाहेति दशाभ्यासेना पञ्चाशतः ॥ ७ ॥ पञ्चाशतप्रभृत्याज्यं जुहोति पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्याँ [शताभ्याँ] स्वाहेति शताभ्यासेना सहस्राद् ॥ ८ ॥ सहस्राभ्यासेनायुतात् ॥ ९ ॥ अयुताभ्यासेना [प्रयुतात्] ॥ १० ॥ प्रयुताय स्वाहा नियुताय स्वाहा परार्धाय स्वाहा धेनवत्सते[18] स्वाहा विवस्वते स्वाहा ॥ व्युच्छन्त्यै स्वाहा व्युच्छन्त्याम् । व्युष्टयै स्वाहा व्युष्टायाम् । उदेष्यते स्वाहोदेष्यत्युद्यते स्वाहोद्यत्युदिताय स्वाहोदिते । सर्वस्मै स्वाहा स्वर्गाय स्वाहेत्यन्ततो हुत्वातिरिक्तमन्नमश्वाय निदधाति ॥ ११ ॥ उक्थ्यः शाक्वर[19]पृष्ठो मध्यममहः ॥ १२ ॥ उपाँश्वन्तर्यामयोः पात्रे प्रयुज्य महिम्नोः पात्रे प्रयुनक्ति सौवर्णराजते ॥ १३ ॥

1 ? The ms first hand नैतुदवो.
2 वा seems to be superfluous
3 ?
4 MS II. 6. 6 67. 5–10.
5 The ms देवस्यो first hand, देविका second hand
6 The ms °पृष्टया.
7 MS III 15. 10 180. 7
8 ? The ms प्रथम .
9 The entire sutra is corrupt
10-10 The names of the various sacrificial substances are mostly corrupt
11 ? The ms प्रत्यन
12 MS III 12 6
13 With MS III 12. 7–14 ?
14 MS III. 12 15
15 ? The ms °त्येकोनशताय
16 ? The ms °त्येक°द
17 ? The ms second hand धर्मेणारभ्य अष्टाभ्यो स्वाहेति.
18 Here and in sutras 8, 10 the ms reads °भ्याँसेना.
19 ? The ms सार° first hand, साम° second hand

आग्रायणस्थालीं प्रयुज्य प्राजापत्याग्रपात्रं प्रयुनक्ति ॥ १४ ॥ उपांश्वन्तर्यामौ गृहीत्वा महिमानौ गृह्णाति हिरण्यगर्भ इति द्वाभ्याम् ॥ १५ ॥ रुक्मप्रतिहितेना येनं तमानयति ॥ १६ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] द्वितीय खण्डम् ॥

ज्योतिर्यज्ञस्य पवते मधु घृत पिता देवानां जनिता विभूवसु ।
तस्यादधातु रत्नं स्वधयोरपीच्य मदिन्तमो मत्सर इन्द्रियो रस ॥

इत्यश्वस्य ग्रीवासु रुक्मं प्रतिमुच्य श्येनो ऽसि गायत्र इति पवमानानुमन्त्र-णेनाश्वस्य पुच्छमन्वारभन्ते[1] ॥ १ ॥ अग्निर्नेत्राणि जनदिति[2] पवमानं यन्त्यास्तावं प्राञ्चः ॥ २ ॥ उद्गातारमपरुणद्धि—उद्गातर्निष्क्रेण त्वा शतपलेनापरुणध्मीति ॥ ३ ॥ तम परुध्यर्त्विजो ऽपरुन्धन्ति ॥ ४ ॥ अश्वायोपरुन्धन्ति षडवाः ॥ ५ ॥ संक्रन्दय-त्यश्वयडवम् ॥ ६ ॥ अश्वेनास्तावमाक्रमयन्ति ॥ ७ ॥ अश्वाक्रान्त आर्चिष्यो-नुपयच्छन्ति ॥ ८ ॥ उद्गातारमुपह्वयते—उद्गातर्निष्क्रेण त्वा शतपलेनोपह्वयामीमां देवता-मुद्गायन्तीमनुद्गायेति ॥ ९ ॥ स्तुते शतमानमुद्गात्रे ददाति ॥ १० ॥ सोपयन्त्यान्यूपा न्संमीर्य पशूनुपाकरोति ॥ ११ ॥ अश्वस्तूपरो गोमृगस्ते प्राजापत्या अग्निष्ठे ॥ १२ ॥ कृष्णग्रीव आग्नेयो ललाटे इत्यश्वे पर्यङ्ग्याः ॥ १३ ॥ सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयो[3] ॥ १४ ॥ सौर्यं श्वेतमुत्तरतो यामं कृष्णं दक्षिणतः ॥ १५ ॥ वायव्य श्वेत पुच्छा इन्द्राय स्वपस्याय वेहद्वैष्णवं इति ॥ १६ ॥ बभ्रुररुणबभ्रुरित्यनुवाके[4] यथादेवतमुपाकरोति जानपदीभि. संज्ञाभिः प्रतियवांशे घरसयत्वा इति समा-न्तरानु यः किहा इति यावेनां पुंसरूपा इति येकथितामुत्सृष्टी ॥ १७ ॥ त्र्यवं इत्यर्धहायना दित्यवाहं इति द्विहायना त्र्यवाहयति आपराग्न्यच्यर्य इति त्रिहायना ॥ १८ ॥ तुर्यवाह[5] इति चतुर्हायनाः ॥ १९ ॥ पष्ठवाह[5] इति पञ्चवर्षाः ॥ २० ॥ धूम्रा वसन्तायेत्येनुवाकाभ्यामन्वहं पशुयन्यैरिष्ट्वा सोमानामोद्धरेत ॥ २१ ॥ वसन्ताय कपिञ्जलानित्येकर्यिंशत्यनुवाकैरारण्यानुपाकरोति कुम्भेषु

1 1
2 MS III, 12 16
3 I e the horse L
4 1 The ms ॰मग्नयतेना॰
5 The ms ॰रमते
6 MS IV 10 1 140 9
7 The ms ॰स्ताय प्राप्तो (प्राञ्चो second hand)
8 The ms पूरानुरामाय (॰गमेय second hand)
9 Identical with MS III 13 2
10 Probably MS III 13 3-20
11-11 Hopelessly corrupt
12 MS III 13 17
13 MS III, 13 18
14 MS III 13 19.
15 MS III 14 1

पन्नगानौपजलजरासु हस्तिनः पञ्जरेषु नासिनो दंष्ट्रिणश्च ॥ २२ ॥ यूपेषु[2] ग्राम्यान्पशून्नियुनक्त्यन्तरालेष्वारण्यान्धारयन्ति ॥ २३ ॥ वेतसशाखया प्राजापत्यानुपकरोति सक्तशाखाभिरेणेतरान् ॥ २४ ॥ युञ्जन्ति ब्रध्नमित्यश्वं युनक्ति ॥ २५ ॥ युञ्जन्त्यस्य काम्येति[4] रथं युनक्ति ॥ २६ ॥ केतुं कृण्वन्निति[4] ध्वजमुपकर्षति ॥ २७ ॥ जीमूतस्येवेति[4] वर्माभ्यूहते[5] ॥ २८ ॥ धन्वना गा इति धनुरादत्ते ॥ २९ ॥ वक्ष्यन्तीवेति[4] ज्यामभिमन्त्रयते ॥ ३० ॥ ते आचरन्तीति[4] धनोरार्त्नीम् ॥ ३१ ॥ बह्वीनां पितेतीषुधिम् ॥ ३२ ॥ रथे तिष्ठन्निति[4] सारथिम् ॥ ३३ ॥ तीव्रान्घोषानिर्त्यश्वान् ॥ ३४ ॥ वनस्पते वीड्वङ्ग इत्यारोहति[6] ॥ ३५ ॥ स्वादुषंसदं इत्यारुह्य जपति ॥ ३६ ॥ अहिरिवेति[4] तलं बद्ध्वा जपति ॥ ३७ ॥ [काशा]मादायावीरि सक्थिरसौ्यश्वान्सं क्षिपति ॥ ३८ ॥ आश्वासयति[7] ॥ ३९ ॥ दुन्दुभीनाघ्नन्त्यामूरजेति[7] ॥ ४० ॥ यद्वातो ऽपो इत्यश्वेनापो ऽवगाहेत ॥ ४१ ॥ एतं स्तोतरित्यावर्तयति ॥ ४२ ॥ वि ते मुञ्चामीति[8] विमुञ्चति ॥ ४३ ॥ पत्न्यो ऽभ्यञ्जन्ति—वसवस्त्वाञ्जन्त्विति[9] कासाम्व येन महिषी रुद्रास्त्वाञ्जन्त्विति[10] गौल्गुलवेन वावाता दित्यास्त्वाञ्जन्त्विति[10] मौस्तफाटेन[11] परिवृक्ती ॥ ४४ ॥ त्रिसहस्रं मणीन्लोमस्वचयेषु[12] ग्रथ्नन्ति ॥ ४५ ॥ भूरिति[13] हरितान्महिष्यभिषेकाद्दिराजपुत्राणां दुहितृशतेन सह ॥ ४६ ॥ भुवं इति रजतान्वावाताराज्ञां दुहितृशतेन सह ॥ ४७ ॥ स्वरिति[13] शङ्खमयान्परिवृक्ती सूतग्रामणीनां दुहितृशतेन सह ॥ ४८ ॥ लाभ्यस्त्वेस्वेनातमापयति[13] ॥ ४९ ॥ होता च ब्रह्मा च ब्रह्मोद्यं वदतो दक्षिणत आहवनीयस्य ब्रह्मोत्तरतो होता ॥ ५० ॥ क स्विदेकाकी चरतीति[13] पृच्छति सूर्य एकाकी चरतीति[13] प्रत्याह ॥ ५१ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] तृतीय खण्डम् ॥

पृच्छामि त्वा परमन्त पृथिव्या पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेत पृच्छामि वाच परमं व्योम ॥

इति ।

इयं वेदि परो अन्त पृथिव्या अयं यज्ञो भुवनस्य नाभि ।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाच परमं व्योम ॥

1 ?
*2 The ms यूपे first hand, यूपे second hand
3 ? The ms ग्राम्यन्यस्वन्नितुनक्त्यायशेकेभ्वा॰
4 MS III, 16 3
5 ? The ms वर्म भ्यूह ति
6 The ms इति आहति
7 MS III 12 4 161 10
8 MS III, 12 18
9 MS I 4 1 48 ?
10 MS III 12 19
11 ? The ms मोस्तुफादेन first hand, मौस्त कृतेन second hand
12 ? The ms लोममश्वा चायमश first hand, लोम्नि अश्वावायवेषु second hand
13-13 Hopelessly corrupt

इति प्रत्याह ॥ १ ॥ का स्विदासीत्पूर्वचित्तिरिति पृच्छति । द्यौरासीत्पूर्वचित्तिरिति प्रत्याह ॥ २ ॥ अन्यतरः पृच्छत्यन्यतरः प्रत्याह ॥ ३ ॥ समानमोपपायनात् ॥ ४ ॥ यद्यश्वो न पिबेत्तं ब्रूयात्—

अग्निः पशुरासीत् । तमालभन्त । तेनायजन्त । स इमं लोकमजयद्यस्मिन्नग्निः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

वायुः पशुरासीत् । तमालभन्त । तेनायजन्त । सो ऽन्तरिक्षं लोकमजयद्यस्मिन्वायुः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

आदित्यः पशुरासीत् । तमालभन्त । तेनायजन्त । सो ऽमुं लोकमजयद्यस्मिन्नादित्यः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

इति ॥ ५ ॥ पर्यग्निकृतानुत्सृजन्त्यारण्यान्ग्राम्याँश्च पुरुषाँश्च ॥ ६ ॥ शामित्रायाश्वस्य नीयमानस्य पौष्णमजमग्रतो नयन्ति ॥ ७ ॥ अधस्ताद्दर्भमास्यति ॥ ८ ॥ वासो हिरण्यरुक्मे ताप्र्यैणार्श्वं संज्ञपयन्ति श्यामूलेन वा ॥ ९ ॥ स्पन्द्येतरान् ॥ १० ॥ प्राणाय स्वाहेति[1] संज्ञप्यमानेषु जुहोति ॥ ११ ॥ अम्बेऽम्बिके इति महिषीं पत्न्य उदानयन्ति ॥ १२ ॥ सव्यान्ग्रन्थान्कृत्वा नव कृत्वः पर्यग्निसव्यं परियन्ति—गणानां त्वा गणपतिं हवामहे इति पर्यायैर्वसो ममेत्येनुपजाति ॥ १३ ॥ आहमजानीति[3] महिष्यनुपरिविष्यति[4] ॥ १४ ॥ तौ सहेति[5] पादान्प्रसारयन्स्वर्गे लोके प्रोर्णुवातामित्यहतेन वाससा पादतोदशेन प्रच्छाद्य वृषा वाममिति संहितप्रजननयोः पत्नीँ[6] यजमानो ऽनुमन्त्रयते ॥ १५ ॥ ऊर्ध्वामेनामुच्छ्रापयेति[7] महिषीं पत्न्य उदानयन्ति ॥ १६ ॥ गायत्री त्रिष्टुबिति[8] पर्यायैः सूचीभिरसिपथान्कल्पयति द्वाभ्यां द्वाभ्यामेकैका हरिणीभिर्महिषी रजताभिर्वावाता लोहमयीभिः परिवृक्त्यसंलभनायाशल्मीपिष्टैरवलिप्यं ॥ १७ ॥ वपाभिः प्रचरन्ति सह प्राजापत्यानाँ सहेतरेषाम् ॥ १८ ॥ नाश्वस्य वपा भवति ॥ १९ ॥ चन्द्रं नाम मेदः ॥ २० ॥ तदस्य वपास्थाने ॥ २१ ॥ प्रजापतये ह्यस्य छागस्य गोमृगस्य चन्द्रवपानां मेदस इति प्राजापत्यानाँ संप्रैषः । विश्वेभ्यो देवेभ्यश्छागानामुष्ट्राणां मेषाणां वपानां मेदस इतीतरेषाम् ॥ २२ ॥ अभितो वपा महिमानौ जुहोति ॥ २३ ॥ हुत्वा परिवप्यौ परिवाप्यमानाभ्याँ[1] सूकराविकर्तमश्वं निकृन्तति ॥ २४ ॥ तस्य पवमानो[1] लोहितँ श्रपयति ॥ २५ ॥ दक्षिणाकाले काममात्रा दक्षिणा ददाति ॥ २६ ॥ यदि कामान्नापयेदिपुष्टं[1] ब्राह्मणानामन्नं दद्याद्भूमिपुरुषवर्जं प्राच्यां दिश्यध्वर्यवे दक्षिणस्यां ब्रह्मणे प्रतीच्याँ होत्र उदीच्यामुद्गात्रे ॥ २७ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] चतुर्थं खण्डम् ॥

1 1

2 1 The ms पवताश्वेणा०.

3 MS III. 12. 20

4 Perhaps to be emended to उपसंविशति.

5 MS III. 13. 1: 168. 1.

6 MS II. 12. 21.

.. ..... ..... ........... [1]प्रात्यँ सिँहचर्मण्याभिषिञ्चन्त्यृषभचर्माध्याधि धारयन्ति—सहस्रशीर्षा पुरुषं[2] इति शतकृष्णलँ रुक्मं शतावृण्णमुपरिष्टाद्दधाति हिरण्यगर्भ[3] इति पूर्वासाँ सप्तानां प्रथमानां पुरस्तादपानमृत इत्युपरिष्टान्मासनामानि हुत्वा प्रातर्हस्तं[x] गृह्णाति ॥ ५ ॥ जागतान्विष्णुक्रमान्क्रामति ॥ ६ ॥ प्राजापत्यं चरुशेषं पालाशपात्रेष्वासिच्यं मध्यत:कारिणो ऽभिषिञ्चन्ति ॥ ७ ॥ वि रक्षो वि मृधो जहीति[x] मुखँ विमृष्टे ॥ ८ ॥ प्रचरणकाल उत्तरत आहवनीयस्य वैतसे कटे ऽश्वस्यावद्यति तैजने दक्षिणतो ऽन्येषां पशूनाम् ॥ ९ ॥ पुरस्तादाहवनीये वैतसं कटमास्तीर्य तस्मिन्प्राजापत्यान्संचिनोति प्राञ्चमश्वं प्राञ्चं तूपरं प्रत्यञ्चं गोमृगमिति ॥ १० ॥ शाद दद्भि स्वाहावकान्दन्तमूलै स्वाहेति[x] पर्यायैर्द्यावापृथिवी वर्तोभ्यामित्येतस्य पुरस्तादरण्ये ऽनुवाक्येन गणेन जुहोति ॥ ११ ॥ उदुह्य[x] जांवुकं[x] पूषणँ वनिष्ठुनां ॥ मा नो मित्र[10] ॥ समिद्धो अञ्जन्निति[11] त्रिभिरनुवाकैराहुती जुहोति ॥ १२ ॥ द्विपदाभिर्[12]न्ततो हुत्वा स्विष्टकृतं प्रत्यश्वलोहितं जुहोति—अग्नये स्विष्टकृते स्वाहेति गोमृगकण्ठेनाश्वशफेन चरुणौ[x] ॥ १३ ॥ सर्वस्तोमो ऽतिरात्र उत्तममहः ॥ १४ ॥ ऐकादशिनानालभते ॥ १५ ॥ समानमावभृथात् ॥ १६ ॥ आवभृथके कर्मणि कृते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षजटिलगांभवस्याव भृथेमवस्रुतस्य मूर्धनि जुहोति—जम्बुकाय स्वाहा महाहत्यायै स्वाहेति ॥ १७ ॥ नव सौरीर्वशा श्वेता अनुबन्ध्या: ॥ १८ ॥ तासाँ वपासु हूयमानासु प्रतिवातं पापकृतस्तिष्ठेताध्वर्यु: पापान्मुच्यते ॥ १९ ॥ पापाद्वासवपार्श्वं सत्वार्सं तस्मिन्साण्डं त्वाष्ट्रँ सकिकिदीविविर्दीगयमित्युपाकरोति ॥ २० ॥ सोदवसनीये सँस्थिते पशुबन्धेन यजते ॥ २१ ॥ त्रिशाखो यूपो ऽष्टाश्रय: शाखापृथुकपालानि[x] तन्त्रँ स्वरुरपहरति[x] ॥ २२ ॥ त्वैतानां[x] प्रथम: कालकमेविवभ्रुस्तं[x] मध्यमे विशाखयूप आश्विनमालभेत ॥ २३ ॥ तयोर्द्वितीयस्तं भौमं दक्षिणार्धे ॥ २४ ॥ यस्तूती यस्तमूर्जं उत्तरार्धे ॥ २५ ॥ पशूनां पुरोडाशमनु मृगारेष्टिं निर्वपति ॥ २६ ॥

1 *The lacuna is filled up by* युञ्जन्ति ब्रध्न अमूरजेति (III 4 3 25-40) Then follows the single word प्रत्यावर्तयति The numbering of the sutras is wholly provisional

2 Neither the sukta nor the verse occur in our MS, but it may have formed a part of the Āranyaka

3 MS III 12 16 165 1

4 1 The sequence of the acts is also disturbed

5 1

6 The formula is not derived from MS

7 The ms adds स्विष्टकृत् इति

8 MS III 15 1

9 MS III 15 9

10 MS III 16 1

11 MS III, 16 2

12 Cp Āp XX 21 14

13 The text is partly corrupt

सहस्विष्टकृदिडं मृगारेष्टिपशुपुरोडाशानां च ॥ २७ ॥ तस्मिन्संस्थिते द्वादश ब्रह्मौदनान्श्रपयति ॥ २८ ॥ तान्महर्त्विजः प्राश्नन्ति ॥ २९ ॥ तेभ्यो द्वादश द्वादश रुक्मान्ददाति ॥ ३० ॥ संतिष्ठते ऽश्वमेधः ॥ ३१ ॥ तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याँ[1] यो ऽश्वमेधेन यजते[2] यश्चैव देविकाप्रभृतिभिरिष्टिभिर्यजते यजते[3] ॥ ३२ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] पञ्चम खण्डम् ॥

इति चतुर्थो[4] ऽध्याय ॥



1 The ms adds तरति

2 Cp ŚatBr XIII 3 1 1

3 Instead of the second यजते the ms has अध्यायसमाप्तौ द्विरभ्यास श्रान्तो वाचार्य

4 The ms पचमो

